नैवेद्यम् - नानापक्वान्नसंयुक्तं पायसं शर्करान्वितम् । नानाव्यञ्जनशोभाढ्यं शाल्योदनमनुत्तमम् ।।
दधिदुग्धघृतैर्युक्तं लवङ्गैलासमन्वितम् । मरीचिचूर्णसहितं क्वथिकावटकान्वितम् ।।
राजिकाधान्यसंयुक्तं मेथीपिष्टं सतक्रकम् । हिङ्गुजीरककूष्माण्डमरीचिमाषपिष्टकैः ।।
सम्पादितैः सुपक्वैश्च भर्जितैर्वटकैर्युतम् । मोदकापूपलड्डूकशष्कुलीमण्डकादिभिः ।।
पर्पटैरपि संयुक्तं नैवेद्यममृतान्वितम् । हरिद्राहिङ्गुलवणसहितं सूपमुत्तमम् ।।
ससामुद्रं गृहाणेदं भोजनं कुरु सादरम् । सुतृप्तिकारकं तोयं सुगन्धञ्च पिबेच्छया ।।

उत्तरापोशनम्- त्वयि तृप्ते जगत्तृप्तं नित्यतृप्ते महात्मनि । उत्तरापोशनार्थं ते दद्मि तोयं सुवासितम् ।।

जलम् - मुखपाणिविशुद्ध्यर्थं पुनस्तोयं ददामि ते । दाडिमं मधुरं निम्बुजम्ब्वाम्रपनसादिकम् ।।

फलम् - द्राक्षारम्भाफलं पक्वकर्कन्धूखार्जुरं फलम् । नारिकेलं च नारिङ्गमाञ्जिरं जम्बिरं तथा ।।
उर्वारुकञ्च देवेश ! फलान्येतानि गृह्यताम् । मुखपाणिविशुद्ध्यर्थं पुनस्तोयं ददामि ते ।।

उद्वर्तनम्- गृहाण चन्दनं चारु कराङ्गोद्वर्तनं शुभम् । नानापरिमलद्रव्यैर्निर्मितं चूर्णमुत्तमम् ।।
सुगन्धिनामकं पुण्यगन्धि चारु प्रगृह्यताम् । चारुशालूरसम्भूतं वंशसारसमुद्भवम् ।।

चूर्णम् - सीमन्तभूषणं चूर्णं लाक्षारञ्जितमस्तु ते । सचन्द्रपूगचूर्णाढ्यं खाद्यखादिरसंयुतम् ।।

ताम्बूलम् - एलालवङ्गसम्मिश्रं ताम्बूलं केसरान्वितम् । न्यूनातिरिक्तपूजायाः सम्पूर्णफलहेतवे ।।

दक्षिणा - दक्षिणां काञ्चनीं देव ! स्थापयामि तवाग्रतः । सितपीतैस्तथारक्तैर्जलजैः कुसुमैः शुभैः ।।

माल्यम् - ग्रथितां सुन्दरां मालां गृहाण परमेश्वर । हरिताः श्वेतवर्णा वा पञ्चत्रिपत्रसंयुताः ।।

दूर्वाङ्कुराणि- दूर्वाङ्कुरा मया दत्ता एकविंशतिसम्मिताः । एकविंशतिसङ्ख्याकाः कुर्वे देवप्रदक्षिणाः ।।
पदे पदे ते देवेश ! नश्यन्तु पातकानि मे । औदुम्बरे राजते वा कांस्ये काञ्चनसम्भवे ।।

आरार्तिकम्- पात्रे प्रकल्पितान् दीपान् गृहाण चक्षुरर्पकान् । पञ्चारार्तिं पञ्चदीपैर्दीपितां परमेश्वर ।।

कर्पूरदीपः - चारुचन्द्रनिभं दीपं गृहाण वीचिवारणम् । यथाऽस्य नेक्ष्यते भस्म तथा पापं विनाशय ।।

स्तुतिः - स्तोत्रैर्नानाविधैः सूक्तैः सहस्रनामभिस्ततः । उपविश्य स्तुवीतैनं कृत्वा स्थिरतरं मनः ।।
दीनाधीश ! दयानिधे ! सुरगणैः संसेव्यमान ! द्विज !
ब्रह्मेशानमहेन्द्रशेषगिरिजागन्धर्वसिद्धैः स्तुत !
सर्वारिष्टनिवारणैकनिपुण ! त्रैलोक्यनाथ प्रभो !
भक्तिं मे सफलां कुरुष्व सकलां क्षान्त्वाऽपराधान् मम ।।
इति मूर्तिं समभ्यर्च्य दण्डवत् प्रणिपत्य च । जपेन्मन्त्रं ततो देवि ! सर्वसिद्धिप्रदायकम् ।।
(ग.पु. १/४९)

## ३.२ सङ्कष्टचतुर्थीव्रतपूजनविधि

विशेषतः माघकृष्ण चतुर्थी तिथिमा सङ्कष्टचतुर्थीव्रत गरी निम्नअनुसारको पूजाविधि अँगालेर श्रीगणेशको आराधना गर्ने शास्त्रीय विधान रहेको छ । यसकारण माघकृष्ण चतुर्थी तिथिलाई सङ्कष्टहरचतुर्थी तिथि पनि भनिन्छ । यस तिथिमा गणेशपूजनको विशेष महत्त्व रहेको छ । सामान्यतः भक्तहरूले कुनै पनि महिनाको कृष्णपक्षको चतुर्थी तिथिको रातमा

चन्द्रोदयपछि सङ्कष्टचतुर्थीव्रत लिएर गणेशपूजा गर्ने प्रचलन पनि रहेको छ । सङ्कष्टचतुर्थीव्रतसँग सम्बद्ध गणेशपूजनबाट दुर्लभ वस्तुहरूको प्राप्ति, गम्भीर सङ्कटबाट मुक्ति, हराएका आफन्तहरूसँग भेटघाट, अपहरणमा परेका आफन्तहरूको उद्धार, गम्भीर रोग, ऋणबाट निवृत्ति, धर्म, अर्थ, काम एवं मोक्षजस्ता पुरुषार्थको प्राप्ति र मृत्युपाशबाट मुक्तिजस्ता फल प्राप्त हुन्छन् । भक्तजनहरूले गम्भीर विपत्ति र घोर सङ्कटका समयमा सङ्कष्टचतुर्थीव्रत लिएर श्रीगणेशको पूजन गर्दा अवश्य इच्छित फल प्राप्त हुन्छ ।

**शूरसेन उवाच**

ब्रह्मणा कथमादिष्टं कृतवीर्याय सिद्धिदम् । तन्ममाचक्ष्व सङ्कष्टचतुर्थीव्रतमुत्तमम् ।।

**इन्द्र उवाच**

सत्यलोके सुखासीनं सर्वज्ञं चतुराननम् । कृतवीर्यपिता गत्वा पप्रच्छ प्रणतो नृपः ।।

**कृतवीर्यपिता उवाच**

देवदेव ! जगद्धातः ! प्रणतार्तिनिवारण ! । वर्तते हृदये यन्मे पृच्छामि त्वां वदस्व तत् ।।
आपत्सु वर्तमानानां नृणां व्याकुलचेतसाम् । चिन्तया व्यग्रमनसां वियोगे सुहृदां तथा ।।
दुर्लभप्राप्तये नृणां कार्यसिद्धिः कथं भवेत् । अर्थसिद्धिः कथं नित्यं पुत्रसौभाग्यसम्पदाम् ।।
सर्वसङ्कष्टनाशार्थं कार्यं किं मानवैः प्रभो ! ।

**ब्रह्मा उवाच**

शृणु राजन् ! प्रवक्ष्यामि सर्वसिद्धिप्रदं व्रतम् ।।
यस्यानुष्ठानमात्रेण चिन्तितं प्राप्नुयान्नरः । ओषधीभिः शुक्लतिलैर्दिवा स्नायात् प्रसन्नधीः ।।
सङ्कल्पं कारयेत् सम्यग् ध्यात्वा देवं गजाननम् । गणेशं पूजयेद् भक्त्या मन्त्रैरागमसम्भवैः ।।
कृष्णपक्षे चतुर्थ्याञ्च निशि चन्द्रोदयेऽपि च ।

**नृप उवाच**

कथं सम्पूजयेद् ब्रह्मन् ! देवदेवं गजाननम् ।। विस्तरेण मम ब्रूहि प्रणयात् परिपृच्छते ।

**ब्रह्मोवाच**

नित्यकर्म समाप्याऽथ निशायामुदये विधोः ।।
शुचौ देशे गोमयेन लिप्ते मण्डपिकान्विते । तत्र पीठं गणेशस्य पूजयेत् कुङ्कुमाक्षतैः ।।
स्थापयेत् कलशं तत्र पञ्चरत्नसमन्वितम् । तस्योपरि न्यसेत् पात्रं सौवर्णं कलशान्वितम् ।।
तदभावे तु रौप्यं वा ताम्रं वैणवमेव च । तस्योपरि न्यसेद् वस्त्रं क्षौमं वा शक्तिसंयुतः ।।
तस्योपरि लिखेद् यन्त्रमागमोक्तविधानतः । तत्र मूर्तिं गणेशस्य सौवर्णीं लक्षणान्विताम् ।।

ध्यानम्- एकदन्तं महाकायं तप्तकाञ्चनसन्निभम् । लम्बोदरं विशालाक्षं ज्वलत्पावकलोचनम् ।।
आखुपृष्ठसमारूढं चामरैर्वीजितं गणैः । शेषयज्ञोपवीतञ्च चिन्तयेत् तं गजाननम् ।।

आवाहनम् - आगच्छ देवदेवेश ! सङ्कटान्मां निवारय । यावद् व्रतं समाप्येत तावत् त्वं सन्निधौ भव ।।
अथवा सहस्रशीर्षा० ।

आसनम् - गणाधीश ! नमस्तेऽस्तु सर्वसिद्धिप्रदायक ! । आसनं गृह्यतां देव ! सङ्कटान्मां निवारय ।।
अथवा पुरुष एव० ।

पाद्यम् - उमापुत्र! नमस्तेऽस्तु नमस्ते मोदकप्रिय ! । पाद्यं गृहाण देवेश ! सङ्कटं मे निवारय ।।
अथवा एतावानस्य० ।

अर्घ्यम् - लम्बोदर ! नमस्तेऽस्तु रत्नयुक्तं फलान्वितम् । अर्घ्यं गृहाण देवेश ! सङ्कटं मे निवारय ।।
अथवा त्रिपादूर्ध्वं० ।

आचमनीयम् - गङ्गादिसर्वतीर्थेभ्य आहृतं तोयमुत्तमम् । गृहाणाऽऽचमनीयार्थं सङ्कटं मे निवारय ।।
अथवा तस्माद् विराडजायत० ।

पञ्चामृतम् - पयो दधि घृतञ्चैव शर्करामधुसंयुतम् । पञ्चामृतं गृहाणेदं सङ्कटं मे निवारय ।।
अथवा पयः पृथिव्याम्० ।

स्नानम् - चन्द्रभागानर्मदयोर्गङ्गासङ्गमजैर्जलैः । स्नापितोऽसि मया भक्त्या सङ्कटं मे निवारय ।।
अथवा यत्पुरुषेण० ।

वस्त्रयुग्मम् - इभवक्त्र ! नमस्तुभ्यं गृहाण परमेश्वर ! । वस्त्रयुग्मं गणाध्यक्ष ! सङ्कटं मे निवारय ।।
अथवा तं यज्ञम्० ।

यज्ञोपवीतम् - विनायक ! नमस्तुभ्यं नमः परशुधारिणे ! । उपवीतं गृहाणेदं सङ्कटान्मे निवारय ।।
अथवा तस्मा० ।

चन्दनम् - ईशपुत्र ! नमस्तुभ्यं नमो मूषकवाहन ! । चन्दनं गृह्यतां देव ! सङ्कटं मे निवारय ।।
अथवा तस्माद्यज्ञात्० ।

अक्षताः - घृतकुङ्कुमसंयुक्तास्तन्दुलाः सुमनोहराः । अक्षतास्ते नमस्तुभ्यं सङ्कटं मे निवारय ।।
अथवा अक्षन्नमीमदन्त० ।

पुष्पम् - चम्पकं मल्लिका दूर्वाः पुष्पजातीरनेकशः । गृहाण त्वं गणाध्यक्ष ! सङ्कटं मे निवारय ।।
अथवा तस्मादश्वा० ।

धूपः - लम्बोदर ! महाकाय ! धूम्रकेतो ! सुवासितम् । धूपं गृहाण देवेश ! सङ्कटं मे निवारय ।।
अथवा यत्पुरुषम्० ।

दीपः - विघ्नान्धकारसंहारकारक! त्रिदशाधिप ! । दीपं गृहाण देवेश ! सङ्कटं मे निवारय ।।
अथवा ब्राह्मणोऽस्य० ।

नैवेद्यम् - मोदकापूपलड्डूकपायसं शर्करान्वितम् । पक्वान्नं सघृतं देव ! नैवेद्यं प्रतिगृह्यताम् ।।
अथवा चन्द्रमा मनसो जात० ।

फलम् - नारिकेलफलं द्राक्षां रसालं दाडिमं शुभम् । फलं गृहाण देवेश ! सङ्कटान्मे निवारय ।।
अथवा नाभ्या० ।

ताम्बूलम् - क्रमुकैलालवङ्गादिनागवल्लीदलानि च । ताम्बूलं गृह्यतां देव ! सङ्कटं मे विनाशय ।।

दक्षिणा - सर्वप्रीतिकरं देव ! हिरण्यं सर्वसिद्धिदम् । दक्षिणार्थं गृहाणेदं सङ्कटं मे विनाशय ।।
अथवा हिरण्यगर्भ० ।

एकविंशतिदूर्वाङ्कुरसमर्पणम्

ततो दूर्वाङ्कुरान् गृह्य विंशत्येकञ्च भक्तितः । एभिर्नामपदैर्देवमर्चयेत् सुसमाहितः ।।

मन्त्राः- गणाधिपतये नमः।।१।। उमापुत्राय नमः।।२।। अघनाशनाय नमः।।३।। एकदन्ताय नमः।।४।। इभवक्त्राय नमः।।५।। मूषकवाहनाय नमः।।६।। विनायकाय नमः ।।७।। ईशपुत्राय नमः।।८।। सर्वसिद्धिप्रदाय नमः ।।९।। लम्बोदराय नमः ।।१०।। वक्रतुण्डाय नमः ।।११।। मोदकप्रियाय नमः।।१२।। विघ्नविध्वंसकर्त्रे नमः ।।१३।। विश्ववन्द्याय नमः ।।१४।। अमरेशाय नमः।।१५।। गजकर्णाय नमः।।१६।। नागयज्ञोपवीतिने नमः ।।१७।। भालचन्द्राय नमः ।।१८।। परशुधारिणे नमः।।१९।। विघ्नाधिपाय नमः ।।२०।। विद्याप्रदाय नमः ।।२१।।

नीराजनम् - कर्पूरानलसंयुक्तं शेषाघौघविनाशनम् । नीराजनं गृहाणेश ! सङ्कटान्मां विमोचय ।।
अथवा आरात्रिपार्थिवम्० ।

पुष्पाञ्जलिः - चम्पकाशोकबकुलपारिजातभवैः शुभैः । पुष्पाञ्जलिं गृहाणेमां सङ्कटान्मां विमोचय ।।
अथवा यज्ञेन यज्ञ० ।

स्तुतिः - त्वमेव विश्वं सृजसीभवक्त्र ! त्वमेव विश्वं परिपासि देव !।
त्वमेव विश्वं हरसेऽखिलेश ! त्वमेव विश्वात्मक ! आविभासि ।।

नमस्काराः - नमामि देवं गणनाथमीशं विघ्नेश्वरं विघ्नविनाशदक्षम् ।
भक्तार्तिहं भक्तविमोक्षदक्षं विद्याप्रदं वेदनिधानमाद्यम् ।।

प्रदक्षिणा - एवं स्तुवीत विधिवत् प्रणमेत पुनः पुनः । प्रदक्षिणां प्रकुर्वीत यथाशक्त्यैकविंशतिम् ।।

प्रार्थना - ये त्वामसम्पूज्य गणेश ! नूनं वाञ्छन्ति मूढा विहितार्थसिद्धिम् ।
त एव नष्टा नियतं हि लोके ज्ञातो मया ते सकल प्रभावः ।।

वायनम् - आचार्यस्त्वं द्विजाध्यक्ष ! सर्वसिद्धिप्रदायक ! । वायनं गृह्यतां ब्रह्मन् ! सङ्कटान्मां निवारय ।।

विशेषार्घ्यम् - फलपुष्पाक्षतैर्युक्तं जलं ते दक्षिणान्वितम् । विशेषार्घ्यं मया दत्तं सङ्कटान्मां निवारय ।।४३।।

इति षोडशोपचारार्चनम् ।

मन्त्रार्चनम् - ॐ नमो हेरम्ब मदमोदित मम सङ्कटं निवारय स्वाहा। इन्द्रादि लोकपालाँश्च समन्तात् पूजयेत् सुधीः।।
पक्वमुद्गतिलैर्युक्तान् मोदकान् घृतपाचितान् । भक्ष्यान्यन्यानि ताम्बूलं यथाशक्ति प्रकल्पयेत्।।
ततो दूर्वाङ्कुरान् गृह्य विंशत्येकञ्च भक्तितः । एभिर्नामपदैर्देवमर्चयेत् सुसमाहितः ।।
गणाधिप! नमस्तुभ्यमुमापुत्राभयप्रद ! । एकदन्तेभवक्त्रेति तथा मूषकवाहन ! ।।
विनायकेशपुत्रेति सर्वसिद्धिप्रदायक ! । लम्बोदर ! नमस्तुभ्यं वक्रतुण्डाघनाशन ! ।।
विघ्नविध्वंसकर्तेति विश्ववन्द्यामरेश्वर ! । गजवक्त्र ! नमस्तुभ्यं नागयज्ञोपवीतिने ।।
भालचन्द्र ! नमस्तुभ्यं नमः परशुधारिणे । विघ्नाधिप ! नमस्तुभ्यं सर्वविद्याप्रदायक ।।
एवं सम्पूजयेद् देवं दूर्वाभिश्च पृथक् पृथक् । यदुद्दिश्य कृतं सम्यग् यथाशक्ति प्रपूजनम् ।।

तेन तुष्टो भवाशु त्वं हृत्स्थान् कामान् प्रपूरय । विघ्नान् नाशय मे सर्वान् दुष्टाँश्च समुपस्थितान्।।
त्वत्प्रसादेन सर्वाणि कार्याणीह करोम्यहम् । शत्रूणां बुद्धिनाशञ्च मित्राणामुदयं कुरु ।।
इति विज्ञाप्य देवेशं प्रणिपत्य पुनः पुनः । ततो होमं प्रकुर्वीत शतमष्टोत्तरं व्रती ।।
मोदकैर्वायणकं कार्यं व्रतसम्पूर्तिहेतवे । लड्डूकैर्वटकाद्यैर्वा त्रिसप्तफलसंयुतम् ।।
रक्तवस्त्रेण सच्छाद्य स्वाचार्याय निवेदयेत् । गणाधिप ! नमस्तुभ्यं सर्वसङ्कल्पसिद्धिद ! ।।
वायनस्य प्रदानेन सङ्कटान्मां निवारय ।

तिथ्यर्घ्यम् - कथां श्रुत्वा ततः पुण्यां दद्यादर्घ्यं समाहितः ।।
तिथीनामुत्तमे ! देवि ! गणेशप्रियवल्लभे ! । सङ्कटं हर मे देवि ! गृहाणार्घ्यं नमोऽस्तु ते ।।

देवार्घ्यम् - लम्बोदर ! नमस्तुभ्यं सततं मोदकप्रिय ! । सङ्कटं हर मे देव ! गृहाणार्घ्यं नमोऽस्तु ते ।।

चन्द्रार्घ्यम् - चन्द्राय सप्तवारन्तु मन्त्रेणानेन पार्थिव !। क्षीरोदार्णवसम्भूत ! अत्रिगोत्रसमुद्भव ! ।
गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् ।।
ततः क्षमापयेद् देवं ततो विप्राँश्च भोजयेत् । स्वयं भुञ्जीत तच्छेषं ब्राह्मणेभ्यो यदर्पितम् ।।
सप्तग्रासान् मौनयुक्तो यथाशक्त्या यथासुखम्। इत्थं कुर्यात् तु मासेषु चतुर्ष्वपि विधानतः ।।
(ग.पु. १/६१)

## ३.३ सिद्धिविनायकपूजाविधिः

भाद्रशुक्लचतुर्थीमा विजय, पुत्र, पौत्र, यश र अनुकूल पत्नी अथवा पतिको प्राप्ति एवं आयुष्यवृद्धिको उद्देश्यले भगवान् सिद्धिविनायकको व्रत र पूजन गर्नुपर्दछ । भविष्यपुराणअनुसार यहाँ सिद्धिविनायक पूजनविधि निरूपण गरिएको छ । यो विधिअनुसार सिद्धिविनायकको पूजन गर्दा पार्थिव गणपतिको पूजा गर्नुपर्दछ । यसरी सिद्धिविनायकको पूजा गर्नाले कर्तालै चिताएका सम्पूर्ण कामना सिद्ध हुन्छन् ।

प्रयोगः - भाद्रशुक्लचतुर्थीयं मध्याह्नव्यापिनी कार्या- ''प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने देवमर्चयेत्'' इति वचनात्। तत्र व्रती प्रातस्तिलयुतजलैः स्नात्वा शुक्लाम्बरमिति विष्णुं प्रार्थ्य व्रतग्रहणं कुर्यात् ।

व्रतसङ्कल्पः- ॐ तत्सत्३ ॐ विष्णुः३ ॐ अद्योहेत्यादि अमुकशर्माहं-श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं सकलमनोरथप्राप्तिपूर्वकश्रीसिद्धिविनायक-प्रीत्यर्थमेतावत्कालपर्यन्तं सिद्धिविनायकव्रतं करिष्ये । इदं व्रतम्० इति जलं देवाग्रे भूमौ क्षिपेत् ।
ततो मध्याह्नस्नानादि कृत्वा सम्भृतपूजासंभारः स्वासने उपविश्य दीपं प्रज्वलय्याचम्य प्राणानायम्य सुमुखश्चेत्यादिविशेषार्घ्यस्थापनान्तं विधाय सङ्कल्पं कुर्यात् ।

पूजासङ्कल्पः- ॐ तत्सत्३ ॐ विष्णुः३ अद्येहेत्यादिवर्षर्तौ भाद्रपदमासे शुक्लपक्षे सिद्धिविनायकचतुर्थ्यां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माहं ममेह जन्मनि जन्मान्तरेषु च पुत्रपौत्रधनविद्याजययशःस्त्रीकामायुष्याभिवृद्ध्यर्थं विशेषतः श्रीसिद्धिविनायकप्रीतये सिद्धिविनायकव्रतं करिष्ये, तदङ्गत्वेन दीपकलशगणेशपूजनपूर्वकमस्यां मूर्तौ यथाज्ञानेन पुरुषसूक्तमन्त्रैः पुराणोक्त-मन्त्रैश्च ध्यानावाहनादिषोडशोपचारैः श्रीसिद्धिविनायकस्य पूजनमहं करिष्ये इति सङ्कल्प्य दीपकलशगणेशपूजां विधाय देवं पूजयेत् । तत्र सिद्धमूर्तिपूजन-पक्षे

प्राणप्रतिष्ठादिकं न भवति, पार्थिवमूर्तिपूजनपक्षे प्राणप्रतिष्ठादिकं कर्तव्यम् ।

प्राणप्रतिष्ठा- पार्थिवमूर्तौ देवस्थापनं यथा- ॐ हेरम्बाय नम इति शुद्धमृदाहरणम्, ॐ सुमुखाय नम इति सङ्घट्टनम्, ॐ गौरीसुताय नम इति क्रमेण संस्थाप्य प्राणप्रतिष्ठां कुर्यात् । ॐ प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि छन्दांसि जगत्सृष्टिः प्राणशक्तिर्देवता ॐ बीजं ह्रीं शक्तिः क्रौं कीलकम् अस्यां मूर्तौ प्राणप्रतिष्ठापने विनियोगः। प्रतिमायाः शिरसि हृदये च दक्षिणं करं दत्त्वा जपेत् । ॐ आं ह्रीं क्रौं यं रं लं वं शं सं षं हंसः सोऽहं अस्यां मूर्तौ प्राणास्तिष्ठन्तु पुनःपूर्ववत्- आं ह्रीं क्रौं इत्यादि अस्यां मूर्तौ जीव इह स्थितः पुनः पूर्ववत्- ॐ आं ह्रीं क्रौं अस्यां मूर्तौ सर्वेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायू-पस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति प्राणप्रतिष्ठां कृत्वा पीठपूजां कुर्यात् ।

पीठपूजा- ॐ तीव्रायै नमः, ॐ ज्वालिन्यै नमः, ॐ नन्दायै नमः, ॐ भोगदायै नमः, ॐ कामरूपिण्यै नमः, ॐ सत्यायै नमः, ॐ उग्रायै नमः, ॐ तेजोवत्यै नमः, मध्ये ॐ विघ्नविनाशिन्यै नमः, ॐ सर्वशक्तिकमलासनाय नमः ।

## प्रधानदेवपूजा

ध्यानम्- एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम् । पाशाङ्कुशधरं देवं ध्यायेत् सिद्धिविनायकम् ।।
ध्यायेद्देवं महाकायं तप्तकाञ्चनसन्निभम् । दन्ताक्षमालापरशुपूर्णमोदकहस्तकम् ।।
मोदकासक्तशूण्डाग्रमेकदन्तं विनायकम् ।

आवाहनम्- ॐ आवाहयामि विघ्नेश सुरराजार्चितेश्वर । अनाथनाथ सर्वज्ञ पूजार्थं गणनायक ।।
ॐ सहस्रशीर्षा० ।

आसनम्- ॐ विचित्ररत्नरचितं दिव्यास्तरणसंयुतम् । स्वर्णसिंहासनं चारु गृहाण सुरपूजित ।।
ॐ पुरुषएव० ।

पाद्यम्- ॐ सर्वतीर्थसमुद्भूतं पाद्यं गन्धादिसंयुतम् । विघ्नराज गृहाणेदं भगवन् भक्तवत्सल ।।
ॐ एतावानस्य० ।

अर्घ्यम्- ॐ अर्घ्यं च फलसंयुक्तं गन्धपुष्पाक्षतैर्युतम् । गणाध्यक्ष नमस्तेऽस्तु गृहाण करुणानिधे ।।
ॐ त्रिपादूर्ध्व० ।

मधुपर्कः- ॐ दध्याज्यमधुसंयुक्तं मधुपर्कं मयाहृतम् । गृहाण सर्वलोकेश गणनाथ नमोऽस्तु ते ।।

आचमनीयम्- ॐ विनायक नमस्तुभ्यं त्रिदशैरभिवन्दित । गङ्गोदकेन शीतेन सुखमाचमनं कुरु ।।
ॐ ततोविराट्० ।

पञ्चामृतस्नानम्- ॐ पयो दधि घृतं चैव मधु शर्करया युतम् । पञ्चामृतेन स्नपनात् प्रीयतां गणनायकः ।।
'ॐ सिद्धिविनायकाय नमः' इति नाममन्त्रेण गन्धोदकस्नानम् ।

शुद्धोदकस्नानम्- ॐ गङ्गादिसर्वतीर्थेभ्य आनीतं तोयमुत्तमम् । भक्त्या समर्पितं तुभ्यं स्नानाय प्रतिगृह्यताम् ।।
ॐ तस्माद्यज्ञात्सर्वहुतःसम्भृतम्० ।

आचमनीयम्- नाममन्त्रेण स्नानाङ्गमाचमनीयम् ।

वस्त्रम्- रक्तवस्त्रयुगं देव देवाङ्गसदृशं प्रभो । सर्वप्रद गृहाणेदं लम्बोदर हरात्मज ।।
ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः० ।

आचमनीयम्- नाममन्त्रेण वस्त्राङ्गमाचमनीयम् ।

यज्ञोपवीतम्- ॐ राजतं ब्रह्मसूत्रञ्च काञ्चनञ्चोत्तरीयकम् । गृहाण चारु सर्वज्ञ भक्तानां वरदायक ।।
ॐ तस्मादश्वा० ।

आचमनीयम्- नाममन्त्रेण यज्ञोपवीताङ्गमाचमनीयम् ।

गन्धः- ॐ कस्तूरीं चन्दनञ्चैव कुङ्कुमेन समन्वितम् । विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ।।
श्रीगणाध्यक्षाय नमः । ॐ तंय्यज्ञम्० ।

सिन्दूरम्- ॐ उद्यद्भास्करसङ्काशं सन्ध्यावदरुणं प्रभो । वीरालङ्करणं दिव्यं सिन्दूरं प्रतिगृह्यताम् ।।

रक्ताक्षताः- रक्ताक्षतांश्च देवेश गृहाण द्विरदानन ।ललाटपटले चन्द्रस्तस्योपर्युपधार्यताम् ।।

आभरणानि- नानाविधानि दिव्यानि नानारत्नोज्ज्वलानि च । भूषणानि गृहाणेश पार्वतीप्रियनन्दन ।।

पुष्पाणि- ॐ करवीरैर्जातिपुष्पैश्चम्पकैर्बकुलैः शुभैः । शतपत्रैश्च कह्लारैः पूजयामि विनायकम् ।।
सुगन्धीनि च पुष्पाणि जातीकुन्दमुखानि च । त्रिविधानि च पत्राणि गृहाण गणनायक ।।
ॐ यत्पुरुषम्० ।

अङ्गपूजा - **ॐ गणेश्वराय नमः** पादौ पूजयामि, **ॐ विघ्नराजाय नमः** जानुनी पू०, **ॐ आखुवाहनाय नमः** ऊरू पू०, **ॐ हेरम्बाय नमः** कटी पू०, **ॐ कामारिसूनवे नमः** नाभिं पू०, **ॐ लम्बोदराय नमः** उदरं पू०, **ॐ गौरीसुताय नमः** स्तनौ पू०, **ॐ गणनायकाय नमः** हृदयं पू०, **ॐ स्थूलकण्ठाय नमः** कण्ठं पू०, **ॐ स्कन्दाग्रजाय नमः** स्कन्धौ पू०, **ॐ पाशहस्ताय नमः** हस्तान् पू०, **ॐ गजवक्त्राय नमः** वक्त्रं पू०, **ॐ विघ्नहर्त्रे नमः** ललाटं पू०, **ॐ सर्वेश्वराय नमः** शिरः पूजयामि ।

२१पत्रैः पूजनम्- **ॐ सुमुखाय नमः** मालतीपत्रं समर्पयमि, **ॐ गणाधिपाय०** भृङ्गराजपत्रं स०, **ॐ उमापुत्राय०** विल्वपत्रं स०, **ॐ गजाननाय०** श्वेतदूर्वापत्रं स०, **ॐ लम्बोदराय०** बदरीपत्रं स०, **ॐ हरसूनवे०** धत्तूरपत्रं स०, **ॐ गजकर्णाय०** तुलसीपत्रं स०, **ॐ वक्रतुण्डाय०** शमीपत्रं स०, **ॐ गुहाग्रजाय०** अपामार्गपत्रं स०, **ॐ एकदन्ताय०** बृहतीपत्रं स०, **ॐ विकटाय०** करवीरपत्रं स०, **ॐ कपिलाय०** अर्कपत्रं स०, **ॐ गजदन्ताय०** अर्जुनपत्रं स०, **ॐ विघ्नराजाय०** विष्णुकान्तापत्रं स०, **ॐ बटवे०** दाडिमीपत्रं स०, **ॐ सुराग्रजाय०** देवदारुकपत्रं स०, **ॐ भालचन्द्राय०** मरुबकपत्रं स०, **ॐ हेरम्बाय०** अश्वत्थ (सिन्दुवार) पत्रं स०, **ॐ चतुर्भुजाय०** जातीपत्रं स०, **ॐ विनायकाय०** केतकी (अश्मन्तक) पत्रं स०, **ॐ सर्वेश्वराय नमः** अगस्तिपत्रं समर्पयामि ।

२१पुष्पैः पूजनम्- **ॐ सुमुखाय नमः** जातीपुष्पं समर्पयमि, **ॐ गणाधिपाय०** शतपत्रपुष्पं स०, **ॐ कपिलाय०** यूथिकापुष्पं स०, **ॐ गजकर्णाय०** चम्पकपुष्पं स०, **ॐ लम्बोदराय०** कह्लारपुष्पं स०, **ॐ विकटाय०** केतकीपुष्पं स०, **ॐ विघ्ननाशिने०** बकुलपुष्पं स०, **ॐ विनायकाय०** जपापुष्पं स०, **ॐ धूम्रकेतवे०** पुन्नागपुष्पं स०, **ॐ गणाध्यक्षाय०** धत्तूरपुष्पं स०, **ॐ भालचन्द्राय०** मातुलिङ्गपुष्पं स०, **ॐ पत्नीहिताय०** विष्णुक्रान्तापुष्पं स०, **ॐ उमापुत्राय०** करवीरपुष्पं स०, **ॐ गजाननाय०** पारिजातपुष्पं

स०, ॐ **ईशपुत्राय०** कमलपुष्पं स०, ॐ **सर्वसिद्धिप्रदाय०** गोकर्णिकापुष्पं स०, ॐ **मूषकवाहनाय०** कुमुदपुष्पं स०, ॐ **कुमारगुरवे०** तगरपुष्पं स०, ॐ **दीर्घशुण्डाय०** सुगन्धिराजपुष्पं स०, ॐ **अगस्तिपुत्राय०** अगस्तिपुष्पं स०, ॐ **सङ्कटनाशनाय नमः** पाटलापुष्पं समर्पयामि ।

धूपः- ॐ दशाङ्गं गुग्गुलं धूपं सुगन्धं च मनोहरम् । गृहाण सर्वदेवेश उमापुत्र नमोऽस्तु ते ।।
ॐ ब्राह्मणोस्य० ।

दीपः - ॐ सर्वज्ञ सर्वलोकेश त्रैलोक्यतिमिरापह । गृहाण मङ्गलं दीपं रुद्रप्रिय नमोऽस्तु ते ।।
ॐ चन्द्रमामनसः० ।

२१मोदकनैवेद्यम्- शालितण्डुलचूर्णोत्थान् सगुडान् घृतपाचितान् । मोदकान् ददि नैवेद्यं नमस्ते विघ्ननाशिने।।
नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं च वरं देहि परत्र च परां गतिम् ।।
नानाखाद्यमयं दिव्यं तुष्ट्यर्थं ते निवेदितम् । मया भक्त्या शिवापुत्र गृहाण गणनायक ।।
ॐ नाभ्याऽआसीत्० । अपोशानार्थे जलं समर्पयामि ।

पानीयम्- ॐ एलोशीरलवङ्गादिकर्पूरपरिवासितम् । प्राशनार्थं कृतं तोयं गृहाण गणनायक ।।
प्राणादिमुद्राः प्रदर्श्य अमृतं भुज्यतां विभो ।
इति नैवेद्यं निवेद्य क्षणं ध्यात्वा यथाशक्ति मूलमन्त्रं प्रजप्य **गुह्यातीति** समर्प्य, नैवेद्यपात्रमुत्थाप्य एकं मोदकम् ॐ **उच्छिष्टभागिने लम्बोदराय नमः** इति दत्त्वा उत्तरापोशानं० हस्तप्रक्षालनं० मुखप्रक्षालनम्० ॐ लम्बोदराय नमः ।

करोद्वर्तनम्- मलयाचलसम्भूतं कर्पूरेण समन्वितम् । करोद्वर्तनकं चारु गृह्यतां जगतःपते ।।

फलम्- बीजपूराम्रपनसखर्जुरीकदलीफलम् । नारिकेलफलं दिव्यं गृहाण गणनायक ।।
ॐ इदं फलं० ।

ताम्बूलम्- पूगीफलं महद् दिव्यं नागवल्लीदलैर्युतम् । कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम् ।।

दक्षिणा- ॐ हिरण्यगर्भ० । ततो नाममन्त्रेण छत्रचामरपादुकादर्पणं समर्पयेत् ।

दूर्वाङ्कुरैः पूजा- ॐ **गणाधिप नमस्तेऽस्तु** दूर्वायुग्मं समर्पयामि, ॐ **उमापुत्र नमस्तेऽस्तु** दूर्वायु०, ॐ **अघनाशन नमस्तेऽस्तु** दूर्वायु०, ॐ **एकदन्त नमस्तेऽस्तु** दूर्वायु०, **इभवक्र नमस्तेऽस्तु** दूर्वायु०, ॐ **मूषकवाहन नमस्तेऽस्तु** दूर्वायु०, ॐ **विनायक नमस्तेऽस्तु** दूर्वायु०, ॐ **ईशपुत्र नमस्तेऽस्तु** दूर्वायु०, ॐ **सर्वसिद्धिप्रदायक नमस्तेऽस्तु** दूर्वायु०, ॐ **कुमारगुरो नमस्तेऽस्तु** दूर्वायुग्मं समर्पयामि ।
ततो गन्धपुष्पाक्षतयुतमेकं दूर्वाङ्कुरं सर्वनामभिरर्पयेत् ।

प्रार्थना- गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन । एकदन्तेभवक्रेति तथा मूषकवाहन ।।
विनायकेशपुत्रेति सर्वसिद्धिप्रदायक । कुमारगुरवे तुभ्यमिमां दूर्वां निवेदये ।।

नीराजनम्- ॐ चन्द्रादित्यौ च धरणीविद्युदग्निस्तथैव च । त्वमेव सर्वज्योतींषि ह्यारार्तिः प्रतिगृह्यताम् ।।

प्रदक्षिणाः- विघ्नेश्वर विशालाक्ष सर्वाभीष्टफलप्रद । प्रदक्षिणां करोमि त्वां सर्वान् कामान् प्रयच्छ मे ।।
ॐ यत्पुरुषेण० ।

नमस्कारः- गजाननं भूतगणाधिसेवितं कपित्थजम्बूफलचारुभक्षणम् ।

उमासुतं शोकविनाशकारकं नमामि विघ्नेश्वरपादपङ्कजम् ।।
नमस्ते विघ्नसंहर्त्रे नमस्तेऽभीप्सितप्रद । नमस्ते देव देवेश नमस्ते गणनायक ।।
ॐ सप्तास्यासन्० ।

मन्त्रपुष्पाञ्जलिः- विनायकेशतनय गजराजसुरोत्तम । देहि मे सकलान् कामान् सर्वसिद्धिप्रदायक ।।
ॐ यज्ञेनयज्ञम० ।

प्रार्थना- विनायक गणेशान सर्वदेवनमस्कृत । पार्वतीप्रिय विघ्नेश मम विघ्नान्निवारय ।।
यन्मयाचरितं देव व्रतमेतत् सुदुर्लभम् । त्वत्प्रसादाद्गणेश त्वं सफलं कुरु सर्वदा ।।
आवाहनं न जानामि० इति देवं विसर्जयेत् ।

वायनदानम्- सफलान् सदक्षिणान् दशमोदकान् संस्थाप्य ॐ हिरण्य-गर्भेति ॐ तत्सत्३ ॐ विष्णुः३ अद्येहेत्यादि अमुकगोत्रोऽमुकशर्माहं सिद्धिविनायकचतुर्थीव्रताङ्गत्वेन कृतायाः श्रीसिद्धिविनायकपूजायाः साद्गुण्यार्थं श्रीसिद्धिविनायकप्रीतये फलदक्षिणायुतान् इमान् दशमोदकान् ब्राह्मणाय दास्ये इति सङ्कल्प्य ब्राह्मणं सम्पूज्य दद्यादनेण मन्त्रेण -

दशकं मोदकानाञ्च फलदक्षिणया युतम् । वायनं देव तुष्ट्यर्थं विप्राय प्रददाम्यहम् ।।

ब्राह्मणश्च देवस्यत्वेति मन्त्रेण प्रतिगृह्य कोदात् इति कामस्तुतिं पठेदाशिषश्च दद्यात् । सुवर्णादि-प्रतिमापक्षे पूर्वोक्तविधिना तां प्रदाय यथाशक्ति भूयसीं दत्वा ॐ यस्य स्मृत्या० इत्यादिना कर्मेश्वरार्पणं विधाय बाह्मणान् भोजयेत् स्वयञ्च दशमोदकान् भुञ्जीत ।

परिच्छेद - चार

# यन्त्रादिसहस्त्रनामान्तसन्दर्भ

## ४.१ गणेशयन्त्रोद्धार

गणेशयन्त्रको गर्भमा षट्कोण रहेको हुन्छ र त्योभन्दा बाहिर त्रिकोण हुन्छ । त्रिकोणबाहिर अष्टदल कमल बनेको हुन्छ । त्यसपछिको स्वरूप मातृकायन्त्रसरह हुन्छ । यस यन्त्रमा भगवान् गजाननको आवरणक्रमले पूजा गर्नुपर्दछ ।

**षट्कोणञ्च त्रिकोणञ्च तद्बहिः अन्यत्सर्वम्मातृकायन्त्रवत् ।**



## ४.२ गणेशमन्त्रोद्धार

निम्नलिखित पद्यअनुसार व्यक्त हुने गणेशमन्त्रको विधिपूर्वक दीक्षा नलिकईकन जप गर्दा कुनै पनि लाभ हुँदैन । गुरुदीक्षा लिएपछि मात्र यस मन्त्रको जप फलदायक हुन्छ ।

**श्रीशक्तिस्मरभूविघ्नबीजानि प्रथमं वदेत् ।। ङेन्तङ्गणपतिम्पश्चाद्वरान्ते वरदं परम् ।। उक्त्वा सर्व्वजनं मेऽन्ते वशमानय ठद्वयम् ।। अष्टाविंशत्यक्षरोयं ताराद्यो मनुरीरितः ।।**

उक्त पद्यबाट निम्नानुसारको मन्त्र प्रकट हुन्छ – **श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय ठः ठः ।**

## ४.३ गणेशध्यान

भगवान् श्रीगणेशको ध्यान गर्दा साधकले सर्वप्रथम इक्षुरससागरको माझमा रहेको नवरत्नमय द्वीपको स्मरण गर्नुपर्दछ । नवरत्न द्वीपलाई इक्षुरससागरका जलतरङ्गले चारैतिरबाट पखालिरहेका छन् । मन्द पवनले त्यस दिव्यधाममा रहनुहुने भगवान् श्रीगणेशको सेवा गरिरहेको छ । त्यो द्वीप मन्दार, पारिजात आदि वृक्ष र दिव्य लताले परिवेष्टित छ । रत्नहरूबाट प्रवाहित कान्तिद्वारा यहाँको भूतल पनि रक्ताभ देखिन्छ । उदाइरहेका सूर्य र चन्द्रमाका किरणहरूले यस द्वीपलाई आभामय तुल्याउँछन् । साधकले यस द्वीपको बीचमा रहेका रत्नमय पारिजात वृक्षको संस्मरण गर्नुपर्दछ । त्यो पारिजात ६ वटै ऋतुहरूको सौन्दर्यद्वारा आप्लावित छ । साधकले पारिजातको फेँदमा रहेको शक्तिमय महाकमलभित्र रहेको षट्कोण र त्यसभित्र रहेको त्रिकोणमा विराजमान महागणपतिको ध्यान गर्नुपर्दछ ।

'गजानन, चन्द्रभाल, रक्तप्रभ, त्रिनयन, काखमा रहेकी कमलधारिणी, सिद्धिद्वारा आफ्ना कमलसुन्दर बाहुपाशले आलिङ्गित, बीजापूर, गदा, धनु, बाण, चक्र, कमल, पाश, नीलकमल, विषाण र रक्तकलश धारण गर्नुहुने श्रीगणेशको म ध्यान गर्दछु' साधकले यस्तो भावना गर्नुपर्दछ ।

'गालाहरूबाट बगिरहेका दानधारा पिउन चाहने भमराहरूलाई आफ्ना विशाल आकारका कान हल्लाएर निवारण गर्नुहुने, हातमा धारण गरिएको मणिमय कलशको मुखबाट बाहिर निस्किरहेका रत्नहरूको वर्षा गरेर आफ्ना भक्तिविह्वल भक्तहरूलाई प्रसन्न तुल्याउनुहुने, माणिक्यनिर्मित मुकुट धारण गर्नुहुने र रत्नालङ्कारद्वारा अलङ्कृत भगवान् श्रीगणेशको ध्यान गर्दछु' कर्ताले यस्तो भावना गर्नुपर्दछ । )

**ॐ नवरत्नमयं द्वीपं स्मरेदिक्षुरसाम्बुधौ । तद्वीचिधौतपर्यन्तं मन्दमारुतसेवितम् ।।**
**मन्दारपारिजातादिकल्पवृक्षलताकुलम् । उद्धूतरत्नच्छायाभिररुणीकृतभूतलम् ।।**
**उद्यद्दिनकरेन्दुभ्यामुद्भासितदिगन्तरम् । तस्य मध्ये पारिजातं नवरत्नमयं स्मरेत् ।।**
**ऋतुभिः सेवितं षड्भिरनिशं प्रीतिवर्द्धनैः । तस्याधस्तान्महापीठे रचिते मातृकाम्बुजे ।।**
**षट्कोणान्तस्त्रिकोणाढ्यं महागणपतिं स्मरेत् ।।**
**हस्तीन्द्राननमिन्दुचूडमरुणच्छायन्त्रिनेत्रं रसाश्लिष्टं यत् प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम्।।**
**बीजापूरगदाधनुस्त्रिशिखियुक्चक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशौ हस्तैर्व्वहन्तं भजे ।।**
**गण्डपालीगलद्दानपूरलालसमानसान् । द्विरेफान्कर्णतालाभ्यां वारयन्तम्मुहुर्मुहुः ।।**
**कराग्रधृतमाणिक्यकुम्भवक्त्रविनिस्सृतैः । रत्नवर्षैः प्रीणयन्तं साधकं मदविह्वलम् ।**
**माणिक्यमुकुटोपेतं रत्नाभरणभूषितम् ।।**

## ४.४ न्यास

दायाँ हात, बायाँ हात, ओठ, मुखपुट, दायाँ पाउ, बायाँ पाउ, शिर, च्युँडो, दायाँ नाक, बायाँ नाक, दायाँ आँखा, बायाँ आँखा, दायाँ कान, बायाँ कान, नाभि, हृदय, निधारमा वक्रतुण्ड आदि नाम उच्चारण गर्दै स्पर्श गर्नाले ती-ती अङ्गहरूमा भगवान् श्रीगणेशको स्थापना हुँदा उहाँले आत्मप्राप्ति र भगवद्भक्तिको सर्वोत्तम साधन शरीरको रक्षा गर्दै त्यसलाई दिव्य तुल्याउनु हुन्छ । त्यसकारण न्यासको उपासनामा निकै महत्त्व रहेको हुन्छ । निम्न उद्धृत गणेशन्यास गर्नाले साधकहरूको सबैतिरबाट सुरक्षा हुन्छ ।

### क) मुद्गलपुराणोक्त गणेशन्यास

**श्रीगणेशाय नमः ।। आचम्य प्राणायामं कृत्वा । दक्षिणहस्ते वक्रतुण्डाय नमः । वामहस्ते शूर्पकर्णाय नमः । ओष्ठे विघ्नेशाय नमः । सम्पुटे गजाननाय नमः। दक्षिणपादे लम्बोदराय नमः । वामपादे एकदन्ताय नमः । शिरसि एकदन्ताय नमः । चिबुके ब्रह्मणस्पतये नमः । दक्षिणनासिकायां विनायकाय नमः । वामनासिकायां ज्येष्ठराजाय नमः । दक्षिणनेत्रे विकटाय नमः । वामनेत्रे कपिलाय नमः । दक्षिणकर्णे धरणीधराय नमः । वामकर्णे आशापूरकाय नमः । नाभौ महोदराय नमः । हृदये धूम्रकेतवे नमः । ललाटे मयूरेशाय नमः । दक्षिणबाहौ स्वानन्दवासकारकाय नमः । वामबाहौ सच्चित्सुखधाम्ने नमः ।**

### ख) शाक्तप्रमोदमा निरूपित गणेशन्यास

**तत ऋष्यादिन्यासमाचरेत् ।। शिरसि गणकऋषयेनमः ।। मुखे निचृद्गायत्रीच्छन्दसे नमः ।। हृदि गणपतये देवतायैनमः ।। ततः कराङ्गन्यासौ ।। ॐ श्रीं ह्रीं क्लीं ग्लौं गं गां अङ्गुष्ठाभ्यां नमः ।। ॐ श्रीं ह्रीं क्लीं ग्लौं गं गां तर्जनीभ्यां स्वाहा ।।६।। एवं गूं मध्यमाभ्यां वषट् ।।६।। गैं अनामिकाभ्यां हूम् ।। गौं कनिष्ठाभ्यां वषट् ।।६।। गः करतलकरपृष्ठाभ्यां फट् ।। एवं हृदयादिषु ।।**

## ४.५ गणेशगायत्री

भगवान् गणेशका साधकहरूका निमित्त विभिन्न आम्नायअनुसारका विभिन्न गणेशका गायत्रीहरू पाइन्छन् । साधकहरूले आफ्ना सद्गुरुबाट दीक्षा लिई मन्त्रजप गर्दा मात्र फल प्राप्त गर्दछन् । यहाँ गणेशगायत्रीको परिचयका लागि मात्र यी मन्त्रहरू दिइएको छ -

अ) **एकदन्ताय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात् ।** (गणेश-अथर्वशीर्ष)

आ) **तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात् ।** (मेरुतन्त्र)

इ) **तत्कराटाय विद्महे हस्तिमुखाय धीमहि तन्नो दन्ती प्रचोदयात् ।** (मैत्रायणीसंहिता)

ई) **लम्बोदराय विद्महे महोदराय धीमहि तन्नो दन्ती प्रचोदयात् ।** (अग्निपुराण)

उ) **महोत्कटाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात् ।** (अग्निपुराण)

## ४.६ कवच

शरीरको रक्षाका लागि वीरहरूले युद्धमा जाँदा फलाम आदिले बनेका कवचहरू धारण गरेजस्तै आत्मप्राप्ति अथवा भगवत्प्राप्तिका लागि तत्पर रहने साधकहरूले पनि साधनामा आउने विघ्नहरूको निराकरण गरी लक्ष्य प्राप्त गर्न शास्त्रमा बताइएका कवचहरू धारण गर्नुपर्दछ । यहाँ श्रीगणेशसम्बन्धी केही कवच प्रस्तुत गरिएका छन् ।

### क) गणेशपुराणोक्त कवच

यो गणेशकवच यात्राकालमा पाठ गर्दा अत्यन्त फलदायक हुने मानिएको छ । यसको पाठ गर्नाले घर-परिवारमा भूत, प्रेत, बेताल आदिद्वारा गरिने उपद्रव शान्त हुन्छन् । यसको पाठबाट ठूला व्यक्तिहरूसँग सम्पर्क गरी कार्यसिद्ध गराउन सहयोग प्राप्त हुन्छ ।

मुनिरुवाच

ध्यायेत् सिंहगतं विनायकममुं दिग्बाहुमाद्ये युगे,
त्रेतायान्तु मयूरवाहनमिमं षड्बाहुकं सिद्धिदम् ।
द्वापारे तु गजाननं युगभुजं रक्ताङ्गरागं विभुम्,
तुर्ये तु द्विभुजं सिताङ्गरुचिरं सर्वार्थदं सर्वदा ।।

विनायकः शिखां पातु परमात्मा परात्परः । अतिसुन्दरकायस्तु मस्तकं सुमहोत्कटः ।।
ललाटं काश्यपः पातु भ्रूयुगन्तु महोदरः । नयने भालचन्द्रस्तु गजास्यस्त्वोष्ठपल्लवौ ।।
जिह्वां पातु गणक्रीडश्चिबुकं गिरिजासुतः । वाचं विनायकः पातु दन्तान् रक्षतु दुर्मुखः ।।
श्रवणौ पाशपाणिस्तु नासिकां चिन्तितार्थदः । गणेशस्तु मुखं कण्ठं पातु देवो गणञ्जयः ।।
स्कन्धौ पातु गजस्कन्धः स्तनौ विघ्नविनाशनः । हृदयं गणनाथस्तु हेरम्बो जठरं महान् ।।
धराधरः पातु पार्श्वे पृष्ठं विघ्नहरः शुभः । लिङ्गं गुह्यं सदा पातु वक्रतुण्डो महाबलः ।।
गणक्रीडो जानुजङ्घे ऊरू मङ्गलमूर्तिमान् । एकदन्तो महाबुद्धिः पादौ गुल्फौ सदाऽवतु ।।
क्षिप्रप्रसादनो बाहू पाणी आशाप्रपूरकः । अङ्गुलीश्च नखान् पातु पद्महस्तोऽरिनाशनः ।।
सर्वाङ्गानि मयूरेशो विश्वव्यापी सदाऽवतु । अनुक्तमपि यत् स्थानं धूम्रकेतुः सदाऽवतु ।।
आमोदस्त्वग्रतः पातु प्रमोदः पृष्ठतोऽवतु । प्राच्यां रक्षतु बुद्धीश आग्नेय्यां सिद्धिदायकः ।।
दक्षिणस्यामुमापुत्रो नैर्ऋत्यान्तु गणेश्वरः । प्रतीच्यां विघ्नहर्ताऽव्याद् वायव्यां गजकर्णकः ।।
कौबेर्यां निधिपः पायादीशान्यामीशनन्दनः । दिवाऽव्यादेकदन्तस्तु रात्रौ सन्ध्यासु विघ्नहृत् ।।
राक्षसासुरवेतालग्रहभूतपिशाचतः । पाशाङ्कुशधरः पातु रजः सत्त्वं तमः स्मृतिम् ।।
ज्ञानं धर्मञ्च लक्ष्मीञ्च लज्जां कीर्तिं दयां कुलम् । वपुर्धनञ्च धान्यञ्च गृहान् दारान् सुतान् सखीन्।।
सर्वायुधधरः पौत्रान् मयूरेशोऽवतात् सदा । कपिलोऽजाविकं पातु गवाश्वं विकटोऽवतु ।।
भूर्जपत्रे लिखित्वेदं यः कण्ठे धारयेत् सुधीः । न भयं जायते तस्य यक्षरक्षःपिशाचतः ।।
त्रिसन्ध्यं जपते यस्तु वज्रसारतनुर्भवेत् । यात्राकाले पठेद् यस्तु निर्विघ्नेन फलं लभेत् ।।
युद्धकाले पठेद् यस्तु विजयं प्राप्नुयाद् ध्रुवम् । मारणोच्चाटनाकर्षस्तम्भमोहनकर्मणि ।।
सप्तवारं पठेद् यस्तु दिनानामेकविंशतिम् । तत् तत् फलमवाप्नोति साधको नात्र संशयः ।।
एकविंशतिवारञ्च पठेत् तावद् दिनानि यः । कारागृहगतं सद्यो राज्ञा वध्यञ्च मोचयेत् ।।
राजदर्शनवेलायां पठेदेतत् त्रिवारतः । स राजानं वशं नीत्वा प्रकृतिञ्च सभां जयेत् ।।
इदं गणेशकवचं मुद्गलेन समीरितम् । कश्यपाय च तेनाऽथ माण्डव्याय महर्षये ।।
मह्यं स प्राह कृपया कवचं सर्वसिद्धिदम् । न देयं भक्तिहीनाय देयं श्रद्धावते शुभम् ।
सर्वरक्षाकरं सर्वमनःकामप्रपूरकम् । अनेनास्य कृता रक्षा न बाधाऽस्य भवेत् क्वचित् ।।
राक्षसासुरवेतालदैत्यदानवसम्भवा । ( ग.पु.२/८५/१८-४२ )

### ख ) विश्वसारतन्त्रीय सिद्धिदायक गणेशकवच

यस कवचको पाठ एवं धारण गर्नाले सबै विघ्न निरस्त हुन्छन्, सबै प्रकारका पाप पखालिन्छन् र नानाथरि सिद्धि हस्तगत हुन्छन् । यो कवच सम्पत्तिदायक, शत्रुनाशक, ग्रहपीडानिवारक र धनधान्यदायक मानिएको छ । यसको पाठ र धारण गर्नाले सम्पूर्ण कामनाहरू परिपूर्ण हुन्छन् ।

**ईश्वर उवाच**

**श्रृणु वक्ष्यामि कवचं सर्वसिद्धिकरं प्रिये । पठित्वा पाठयित्वा च मुच्यते सर्वसङ्कटात् ।।१।।**
**अज्ञात्वा कवचं देवि गणेशस्य मनुं जपेत् । सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ।।२।।**
**ॐ आमोदश्च शिरः पातु प्रमोदश्च शिखोपरि । सम्मोदो भ्रूयुगे पातु भ्रूमध्ये च गणाधिपः ।।३।।**
**गणक्रीडश्चक्षुर्युगं नासायाङ्गणनायकः । गणक्रीडाचित्तः पातु वदने सर्वसिद्धये ।।४।।**
**जिह्वायां सुमुखः पातु ग्रीवायां दुर्मुखः सदा । विघ्नेशो हृदये पातु विघ्ननाशश्च वक्षसि ।।५।।**
**गणानां नायकः पातु बाहुयुग्मे सदा मम । विघ्नकर्त्ता च ह्युदरे विघ्नहर्त्ता च लिङ्गके ।।६।।**
**गजवक्त्रः कटीदेशे एकदन्तो नितम्बके । लम्बोदरः सदा पातु गुह्यदेशे ममारुणः ।।७।।**
**व्यालयज्ञोपवीती मां पातु पादयुगे सदा । जापकः सर्वदा पातु जानुजङ्घे गणाधिपः ।।८।।**
**हारिद्रः सर्वदा पातु सर्वाङ्गे गणनायकः । य इदं प्रपठेन्नित्यं गणेशस्य महेश्वरि ।।९।।**
**कवचं सर्वसिद्ध्याख्यं सर्वविघ्नविनाशनम् । सर्वसिद्धिकरं साक्षात् सर्वपापविमोचनम् ।।१०।।**
**सर्वसम्पत्प्रदं साक्षात् सर्वशत्रुक्षयङ्करम् । ग्रहपीडा ज्वरा रोगा ये चान्ये गुह्यकादयः ।।११।।**
**पठनाद् धारणादेव नाशमायान्ति तत्क्षणात् । धनधान्यकरं देवि कवचं सुरपूजितम् ।।१२।।**
**समो नास्ति महेशानि त्रैलोक्ये कवचस्य च । हारिद्रस्य महेशानि कवचस्य च भूतले ।।१३।।**
**किमन्यैरसदालापैर्यत्रायुर्व्ययतामियात् ।**

## ४.७ गणेशशतनामस्तोत्र

गणेशसहस्रनामस्तोत्रका एक हजार नाममध्ये महत्त्वपूर्ण र शीघ्रफलदायक १०८ नाम झिकेर यो शतनामस्तोत्र तयार गरिएको छ । प्रातः ब्राह्ममुहूर्तमा उठेर भगवन् श्रीगणेशको संज्ञना गर्दै यस शतनामस्तोत्रको पाठ गर्नाले भगवान् श्रीगणेश प्रसन्न हुनुहुन्छ । परिणामस्वरूप साधकका विघ्न निरस्त हुन्छन्, पाप पखालिन्छन् र कामना पूर्ण हुन्छन् ।

**ॐ गणेश्वरो गणक्रीडो महागणपतिस्तथा । विश्वकर्मा विश्वमुखो दुर्जयो धूर्जयो जयः ।।**
**सुरूपः सर्वनेत्राधिवासो वीरासनाश्रयः । योगाधिपस्तारकस्थः पुरुषो गजकर्णकः ।।**
**चित्राङ्कश्यामदशनो भालचन्द्रश्चतुर्भुजः । शम्भुतेजा यज्ञकायः सर्वात्मा सामबृंहितः ।।**
**कुलाचलांसो व्योमनाभिः कल्पद्रुमवनालयः । निम्ननाभिः स्थूलकुक्षिः पीनवक्षा बृहद्भुजः ।।**
**पीनस्कन्धः कम्बुकण्ठो लम्बोष्ठो लम्बनासिकः । सर्वावयवसम्पूर्णः सर्वलक्षणलक्षितः ।।**
**इक्षुचापधरः शूली कान्तिकन्दलिताश्रयः । अक्षमालाधरो ज्ञानमुद्रावान् विजयावहः ।।**

कामिनीकामनः काममालिनीकेलिलालितः । अमोघसिद्धिराधार आधाराधेयवर्जितः ।।
इन्दीवरदलश्याम इन्दुमण्डलनिर्म्मलः। कर्मसाक्षी कर्मकर्त्ता कर्माकर्मफलप्रदः।।
कमण्डलुधरः कल्पः कपर्दी कटिसूत्रभृत् । कारुण्यदेहः कपिलो गुह्यागमनिरूपितः ।।
गुहाशयो गुहाब्धिस्थो घटकुम्भो घटोदरः । पूर्णानन्दः परानन्दो धनदो धरणीधरः ।।
बृहत्तमो ब्रह्मपुरो ब्रह्मण्यो ब्रह्मवित्प्रियः । भव्यो भूतालयो भोगदाता चैव महामनाः ।।
वरेण्यो वामदेवश्च वन्द्यो वज्रनिवारणः । विश्वकर्त्ता विश्वचक्षुर्हवनं हव्यकव्यभुक् ।।
स्वतन्त्रः सत्यसङ्कल्पस्तथा सौभाग्यवर्द्धनः । कीर्त्तिदः शोकहारी च त्रिवर्गफलदायकः ।।
चतुर्बाहुश्चतुर्दन्तश्चतुर्थीतिथिसम्भवः । सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात् ।।
कामरूपः कामगतिर्द्विरदो द्वीपरक्षकः । क्षेत्राधिपः क्षमाभर्त्ता लयस्थो लड्डुकप्रियः ।।
प्रतिवादिमुखस्तम्भो दुष्टचित्तप्रसादनः । भगवान् भक्तिसुलभो याज्ञिको याजकप्रियः ।।
इत्येवं देवदेवस्य गणराजस्य धीमतः । शतमष्टोत्तरं नाम्नां सारभूतं प्रकीर्त्तितम् ।।
सहस्त्रनाम्नामाकृष्य मया प्रोक्तं मनोहरम् । ब्राह्मे मुहूर्त्ते चोत्थाय स्मृत्वा देवङ्गणेश्वरम् ।।
पठेत् स्तोत्रमिदं भक्त्या गणराजः प्रसीदति ।।

## ४.८ गणेशसहस्त्रनामस्तोत्र

गणेशसहस्त्रनामका प्रत्येक नाम मूलमन्त्रभन्दा पनि गुरुतर र विशेष फलदायक मानिएका छन् । भाद्र चतुर्थीमा प्रत्येक नामको उच्चारण गर्दै दूबो चढाएर भगवान् श्रीगणेशको आराधना गर्ने साधकका सम्पूर्ण कामना पूर्ण हुन्छन् । यो सहस्त्रनाम विश्ववैभव प्रदान गर्न समर्थ छ । जुनसुकै समयमा पनि यसको पाठ गर्दा अप्रत्याशित फल प्राप्ति हुन्छ । व्रत, तीर्थ, यज्ञ आदिद्वारा नपाइने फल पनि सहस्त्रनामको पाठबाट सहजरूपमा प्राप्त हुन्छन् । बिहान सूर्योदयको समयमा, मध्याह्नमा र सायँकालमा जसले निरन्तर गणेशसहस्त्रनामको पाठ गर्दछ त्यो ऐश्वर्यशाली, विद्वान् र यशस्वी बन्दछ । त्यस्ता साधकको बोलीमा मोहनी हुन्छ र जगत्लाई त्यसले आफ्नो वशमा तुल्याउँछ । त्यस्ता साधकले सांसारिक ऐश्वर्यभोगका साथै आध्यात्मिक उच्चता प्राप्त गर्दछन् । तसर्थ सांसारिक जीवनमा सफलता र पारमार्थिक उन्नति चाहने साधकले नित्य गणेशसहस्त्रनामको पाठ गर्नुपर्दछ ।

**विनियोगः**

**अस्य श्रीमहागणपतिसहस्त्रनामस्तोत्रमालामन्त्रस्य गणेश ऋषिः। महागणपतिर्देवता। नानाविधानिच्छन्दांसि। गमिति बीजम् । तुण्डमिति शक्तिः। स्वाहा कीलकम्। सकलविघ्ननाशनद्वारा महागणपतिप्रीत्यर्थं जपे विनियोगः।**

**न्यासाः**

**गणेश्वरो गणक्रीड इत्यङ्गुष्ठाभ्यां नमः, कुमारगुरुरीशान इति तर्जनीभ्यां नमः, ब्रह्माण्डकुम्भश्चिद्व्योमेति मध्यमाभ्यां नमः, रक्तो रक्ताम्बरधर इत्यनामिकाभ्यां नमः, सर्वसद्गुरुसंसेव्य इति कनिष्ठिकाभ्यां नमः, लुप्तविघ्नः स्वभक्तानामिति करतलपृष्ठाभ्यां नमः।**

हृदयादिन्यासा:

छन्दश्छन्दोवपुरिति हृदयाय नमः, निष्कलो निर्मल इति शिरसे स्वाहा, सृष्टिस्थितिलयक्रीड इति शिखायै वषट्, ज्ञानं विज्ञानमानन्द इति कवचाय हुम्, अष्टाङ्गयोगफलभृदिति नेत्रत्रयाय वौषट्, अनन्त-शक्तिसहित इत्यस्त्राय फट्।

ध्यानम्

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढं त्रिनेत्रम्,
पाशं चैवाङ्कुशाख्यं परशुमभयदं बाहुभिर्धारयन्तम् ।
शक्त्या युक्तं गजास्यं पृथुतरजठरं सिद्धिबुद्धीसमेतम्,
रक्तं चन्द्रार्धमौलिं सकलभयहरं विघ्नराजं नमामि ।।

'श्रीसिद्धिबुद्धिसहिताय सलक्षलाभाय श्रीस्वानन्ददेशाय ब्रह्मणस्पतये साङ्गाय सपरिवाराय सशक्तिकाय सायुधाय सवाहनाय सवारणाय नमः' इति नाममन्त्रेण मानसैः पञ्चोपचारैः सम्पूज्य पठेत् ।

सहस्रनामपाठः

ॐ गणेश्वरो गणक्रीडो गणनाथो गणाधिपः । एकदंष्ट्रो वक्रतुण्डो गजवक्त्रो महोदरः ।।
लम्बोदरो धूम्रवर्णो विकटो विघ्ननायकः । सुमुखो दुर्मुखो बुद्धो विघ्नराजो गजाननः ।।
भीमः प्रमोद आमोदः सुरानन्दो मदोत्कटः । हेरम्बः शवरः शम्भुर्लम्बकर्णो महाबलः ।।
नन्दनोऽलम्पटो भीरुर्मेघनादो गणञ्जयः । विनायको विरूपाक्षो धीरशूरो वरप्रदः ।।
महागणपतिर्बुद्धिप्रियः क्षिप्रप्रसादनः । रुद्रप्रियो गणाध्यक्ष उमापुत्रोऽघनाशनः ।।
कुमारगुरुरीशानपुत्रो मूषकवाहनः । सिद्धिप्रियः सिद्धिपतिः सिद्धः सिद्धिविनायकः।।
अविघ्नस्तुम्बुरुः सिंहवाहनो मोहिनीप्रियः । कटङ्कटो राजपुत्रः शालकः सम्मितोऽमितः ।।
कूष्माण्डसामसम्भूतिर्दुर्जयो धूर्जयो जयः । भूपतिर्भुवनपतिर्भूतानां पतिरव्ययः ।।
विश्वकर्त्ता विश्वमुखो विश्वरूपो निधिर्घृणिः । कविः कवीनामृषभो ब्रह्मण्यो ब्रह्मणस्पतिः ।।
ज्येष्ठराजो निधिपतिर्निधिप्रियपतिप्रियः । हिरण्मयपुरान्तस्थः सूर्यमण्डलमध्यगः ।।
कराहतिध्वस्तसिन्धुसलिलः पूषदन्तभित् । उमाङ्ककेलिकुतुकी मुक्तिदः कुलपालनः ।।
किरीटी कुण्डली हारी वनमाली मनोमयः । वैमुख्यहतदैत्यश्रीः पादाहतिजितक्षितिः ।।
सद्योजातः स्वर्णमुञ्जमेखली दुर्निमित्तहृत् । दुःस्वप्नहृत् प्रसहनो गुणी नादप्रतिष्ठितः ।।
सुरूपःसर्वनेत्राधिवासो वीरासनाश्रयः । पीताम्बरः खण्डरदः खण्डेन्दुकृतशेखरः ।।
चित्राङ्कश्यामदशनो भालचन्द्रश्चतुर्भुजः । योगाधिपस्तारकस्थः पुरुषो गजकर्णकः ।।
गणाधिराजो विजयस्थिरो गजपतिर्ध्वजी । देवदेवः स्मरप्राणदीपको वायुकीलकः ।।
विपश्चिद्वरदो नादोन्नादभिन्नबलाहकः । वराहरदनो मृत्युञ्जयो व्याघ्राजिनाम्बरः ।।
इच्छाशक्तिधरो देवत्राता दैत्यविमर्दनः । शम्भुवक्त्रोद्भवः शम्भुकोपहा शम्भुहास्यभूः ।।
शम्भुतेजाः शिवाशोकहारी गौरीसुखावहः । उमाङ्गमलजो गौरीतेजोभूः स्वर्धुनीभवः ।।

यज्ञकायो महानादो गिरिवर्ष्मा शुभाननः । सर्वात्मा सर्वदेवात्मा ब्रह्ममूर्द्धा ककुप्श्रुतिः ।।
ब्रह्माण्डकुम्भश्चिद्व्योमभालः सत्यशिरोरुहः । जगज्जन्मलयोन्मेषनिमेषोऽग्न्यर्कसोमदृक् ।।
गिरीन्द्रैकरदो धर्माधर्मोष्ठः सामबृंहितः । ग्रहर्क्षदशनो वाणीजिह्वो वासवनासिकः ।।
भ्रूमध्यसंस्थितकरो ब्रह्मविद्यामदोत्कटः । कुलाचलांसः सोमार्कघण्टो रुद्रशिरोधरः ।।
नदीनदभुजः सर्पाङ्गुलीकस्तारकानखः । व्योमनाभिः श्रीहृदयो मेरुपृष्ठोऽर्णवोदरः ।।
कुक्षिस्थयक्षगन्धर्वरक्षःकिन्नरमानुषः । पृथ्वीकटिः सृष्टिलिङ्गः शैलोरुर्दस्त्रजानुकः ।।
पातालजङ्घो मुनिपात् कालाङ्गुष्ठस्त्रयीतनुः । ज्योतिर्मण्डललाङ्गूलो हृदयालाननिश्चलः ।।
हृत्पद्मकर्णिकाशालिवियत्केलिसरोवरः । सद्भक्तध्याननिगडः पूजावारिनिवारितः ।।
प्रतापी कश्यपसुतो गणपो विष्टपी बली । यशस्वी धार्मिकः स्वोजाः प्रथमः प्रथमेश्वरः ।।
चिन्तामणिद्वीपपतिः कल्पद्रुमवनालयः । रत्नमण्डपमध्यस्थो रत्नसिंहासनाश्रयः ।।
तीव्राशिरोधृतपदो ज्वालिनीमौलिलालितः । नन्दानन्दितपीठश्रीर्भोगदाभूषितासनः ।।
सकामदायिनीपीठः स्फुरदुग्रासनाश्रयः । तेजोवतीशिरोरत्नं सत्यानित्यावतंसितः ।।
सविघ्ननाशिनीपीठः सर्वशक्त्यम्बुजाश्रयः । लिपिपद्मासनाधारो वह्निधामत्रयाश्रयः ।।
उन्नतप्रपदो गूढगुल्फः संवृतपार्ष्णिकः । पीनजङ्घः श्लिष्टजानुः स्थूलोरुः प्रोन्नमत्कटिः ।।
निम्ननाभिः स्थूलकुक्षिः पीनवक्षा बृहद्भुजः । पीनस्कन्धः कम्बुकण्ठो लम्बोष्ठो लम्बनासिकः ।।
भग्नवामरदस्तुङ्गसव्यदन्तो महाहनुः । ह्रस्वनेत्रत्रयः शूर्पकर्णो निबिडमस्तकः ।।
स्तबकाकारकुम्भाग्रो रत्नमौलिर्निरङ्कुशः । सर्पहारकटीसूत्रः सर्पयज्ञोपवीतवान् ।।
सर्पकोटीरकटकः सर्पग्रैवेयकाङ्गदः । सर्पकक्ष्योदराबन्धः सर्पराजोत्तरीयकः ।।
रक्तो रक्ताम्बरधरो रक्तमाल्यविभूषणः । रक्तेक्षणो रक्तकरो रक्तताल्वोष्ठपल्लवः ।।
श्वेतः श्वेताम्बरधरः श्वेतमाल्यविभूषणः । श्वेतातपत्ररुचिरः श्वेतचामरवीजितः ।।
सर्वावयवसम्पूर्णः सर्वलक्षणलक्षितः । सर्वाभरणशोभाढ्यः सर्वशोभासमन्वितः ।।
सर्वमङ्गलमाङ्गल्यः सर्वकारणकारणम् । सर्वदैककरः शार्ङ्गी बीजपूरी गदाधरः ।।
इक्षुचापधरः शूली चक्रपाणिःसरोजभृत् । पाशी धृतोत्पलः शालीमञ्जरीभृत् स्वदन्तभृत् ।।
कल्पवल्लीधरो विश्वाभयदैककरो वशी । अक्षमालाधरो ज्ञानमुद्रावान् मुद्गरायुधः ।।
पूर्णपात्री कम्बुधरो विधृतालिसमूहकः । मातुलिङ्गधरश्चूतकलिकाभृत् कुठारवान् ।।
पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकः । भारतीसुन्दरीनाथो विनायकरतिप्रियः ।।
महालक्ष्मीप्रियतमः सिद्धलक्ष्मीमनोरमः । रमारमेशपूर्वाङ्गो दक्षिणोमामहेश्वरः ।।
महीवराहवामाङ्गो रतिकन्दर्पपश्चिमः । आमोदमोदजननः सप्रमोदप्रमोदनः ।।
समेधितसमृद्धिश्रीर्ऋद्धिसिद्धिप्रवर्त्तकः । दत्तसौमुख्यसुमुखः कान्तिकन्दलिताश्रयः ।।
मदनावत्याश्रिताङ्घ्रिः कृतदौर्मुख्यदुर्मुखः । विघ्नसंपल्लवोपघ्नः सेवोन्निद्रमदद्रवः ।।
विघ्नकृन्निघ्नचरणो द्राविणीशक्तिसत्कृतः । तीव्राप्रसन्ननयनो ज्वालिनीपालितैकदृक् ।।

मोहिनीमोहनो भोगदायिनीकान्तिमण्डितः । कामिनीकान्तवक्त्रश्रीरधिष्ठितवसुन्धरः ।।
वसुन्धरामदोन्नद्धमहाशङ्खनिधिप्रभुः । नमद्वसुमतीमौलिमहापद्मनिधिप्रभुः ।।
सर्वसद्गुरुसंसेव्यः शोचिष्केशहृदाश्रयः । ईशानमूर्धा देवेन्द्रशिखः पवननन्दनः ।।
अग्रप्रत्यग्रनयनो दिव्यास्त्राणां प्रयोगवित् । ऐरावतादिसर्वाशावारणावरणप्रियः ।।
वज्राद्यस्त्रपरिवारो गणचण्डसमाश्रयः । जयाजयपरीवारो विजयाविजयावहः ।।
अजितार्चितपादाब्जो नित्यानित्यावतंसितः । विलासिनीकृतोल्लासः शौण्डीसौन्दर्यमण्डितः।।
अनन्तानन्तसुखदः सुमङ्गलसुमङ्गलः । इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिनिषेवितः ।।
सुभगासंश्रितपदो ललिताललिताश्रयः । कामिनीकामनः काममालिनीकेलिलालितः ।।
सरस्वत्याश्रयो गौरीनन्दनः श्रीनिकेतनः । गुरुगुप्तपदो वाचासिद्धो वागीश्वरीपतिः ।।
नलिनीकामुको वामारामो ज्येष्ठामनोरमः । रौद्रीमुद्रितपादाब्जो हुंबीजस्तुङ्गशक्तिकः ।।
विश्वादिजननत्राणः स्वाहाशक्तिः सकीलकः । अमृताब्धिकृतावासो मदघूर्णितलोचनः ।।
उच्छिष्टगण उच्छिष्टगणेशो गणनायकः । सार्वकालिकसंसिद्धिर्नित्यशैवो दिगम्बरः ।।
अनपायोऽनन्तदृष्टिरप्रमेयोऽजरामरः । अनाविलोऽप्रतिरथो ह्यच्युतोऽमृतमक्षरम् ।।
अप्रतर्क्योऽक्षयोऽजय्योऽनाधारोऽनामयोऽमलः । अमोघसिद्धिरद्वैतमघोरोऽप्रमिताननः ।।
अनाकारोऽब्धिभूम्यग्निबलघ्नोऽव्यक्तलक्षणः । आधारपीठ आधार आधाराधेयवर्जितः ।।
आखुकेतन आशापूरक आखुमहारथः । इक्षुसागरमध्यस्थ इक्षुभक्षणलालसः ।।
इक्षुचापातिरेकश्रीरिक्षुचापनिषेवितः । इन्द्रगोपसमानश्रीरिन्द्रनीलसमद्युतिः ।।
इन्दीवरदलश्याम इन्दुमण्डलनिर्मलः । इध्मप्रिय इडाभाग इडाधामेन्दिराप्रियः ।।
इक्ष्वाकुविघ्नविध्वंसी इतिकर्त्तव्यतेप्सितः । ईशानमौलिरीशान ईशानसुत ईतिहा ।।
ईषणात्रयकल्पान्त ईहामात्रविवर्जितः । उपेन्द्र उडुभृन्मौलिरुण्डेरकबलिप्रियः ।।
उन्नतानन उत्तुङ्ग उदारत्रिदशाग्रणीः । ऊर्जस्वान् ऊष्मलमद ऊहापोहदुरासदः ।।
ऋग्यजुःसामसम्भूति ऋद्धिसिद्धिप्रवर्त्तकः । ऋजुचित्तैकसुलभ ऋणत्रयविमोचकः ।।
लुप्तविघ्नः स्वभक्तानां लुप्तशक्तिः सुरद्विषाम् । लुप्तश्रीर्विमुखार्चानां लूताविस्फोटनाशनः ।।
एकारपीठमध्यस्थ एकपादकृतासनः । एजिताखिलदैत्यश्रीरेजिताखिलसंश्रयः।।
ऐश्वर्यनिधिरैश्वर्यमैहिकामुष्मिकप्रदः । ऐरम्मदसमोन्मेष ऐरावतनिभाननः ।।
ॐ कारवाच्य ओंकार ओजस्वानोषधीपतिः । औदार्यनिधिरौद्धत्यधुर्य औन्नत्यनिःस्वनः ।।
अंकुशः सुरनागानामङ्कुशः सुरविद्विषाम् । अः समस्तविसर्गाणां पदेषु परिकीर्त्तितः ।।
कमण्डलुधरः कल्पः कपर्दी कलभाननः । कर्मसाक्षी कर्मकर्त्ता कर्माकर्मफलप्रदः ।।
कदम्बगोलकाकारः कूष्माण्डगणनायकः। कारुण्यदेहः कपिलः कथकः कटिसूत्रभृत् ।।
खर्वः खड्गप्रियः खड्गखातान्तस्थः खनिर्मलः । खल्वाटशृङ्गनिलयः खट्वाङ्गी खदुरासदः ।।
गुणाढ्यो गहनो गस्थो गद्यपद्यसुधार्णवः । गद्यगानप्रियो गर्जो गीतगीर्वाणपूर्वजः ।।

गुह्याचाररतो गुह्यो गुह्यागमनिरूपितः । गुहाशयो गुहाब्धिस्थो गुरुगम्यो गुरोर्गुरुः ।।
घण्टाघर्घरिकामाली घटकुम्भो घटोदरः । ( ङकारवाच्यो ङाकारो ङकाराकारशुण्डभृत् ।। )
चण्डश्चण्डेश्वरसुहृत् चण्डीशश्चण्डविक्रमः । चराचरपतिश्चिन्तामणिचर्वणलालसः ।।
छन्दश्छन्दोवपुश्छन्दोदुर्लक्ष्यश्छन्दविग्रहः । जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः ।।
जपो जपपरो जप्यो जिह्वासिंहासनप्रभुः । झलझ्झल्लोल्लसद्दानझङ्कारिभ्रमराकुलः ।।
टङ्कारस्फारसंरावष्टङ्कारिमणिनूपुरः । ठद्वयीपल्लवान्तस्थसर्वमन्त्रैकसिद्धिदः ।।
डिण्डिमुण्डो डाकिनीशो डामरो डिण्डिमप्रियः । ढक्कानिनादमुदितो ढौको ढुण्ढिविनायकः ।।
तत्वानां परमं तत्त्वं तत्त्वंपदनिरूपितः । तारकान्तरसंस्थानस्तारकस्तारकान्तकः ।।
स्थाणुः स्थाणुप्रियः स्थाता स्थावरं जङ्गमं जगत् । दक्षयज्ञप्रमथनो दाता दानवमोहनः ।।
दयावान् दिव्यविभवो दण्डभृद् दण्डनायकः । दन्तप्रभिन्नाभ्रमालो दैत्यवारणदारणः ।।
दंष्ट्रालग्नद्विपघिटो देवार्थनृगजाकृतिः । धनधान्यपतिर्धन्यो धनदो धरणीधरः ।।
ध्यानैकप्रकटो ध्येयो ध्यानं ध्यानपरायणः । ध्वनिप्रकृतिचीत्कारब्रह्माण्डावलिमेखलः ।।
नन्द्यो नन्दिप्रियो नादो नादमध्ये प्रतिष्ठितः । निष्कलो निर्मलो नित्यो नित्यानित्यो निरामयः ।।
परं व्योम परं धाम परमात्मा परं पदम् । परात्परः पशुपतिः पशुपाशविमोचकः ।।
पूर्णानन्दः परानन्दः पुराणपुरुषोत्तमः । पद्मप्रसन्ननयनः प्रणताज्ञानमोचनः ।।
प्रमाणप्रत्ययातीतः प्रणतार्तिनिवारणः । फलहस्तः पणिपतिः फेत्कारः फाणितप्रियः ।।
बाणार्चिताङ्घ्रियुगलो बालकेलिकुतूहली । ब्रह्म ब्रह्मार्चितपदो ब्रह्मचारी बृहस्पतिः ।।
बृहत्तमो ब्रह्मपरो ब्रह्मण्यो ब्रह्मवित्प्रियः । बृहन्नादाग्र्यचीत्कारो ब्रह्माण्डावलिमेखलः ।।
भ्रूक्षेपदत्तलक्ष्मीको भर्गो भद्रो भयापहः । भगवान् भक्तिसुलभो भूतिदो भूतिभूषणः ।।
भव्यो भूतालयो भोगदाता भ्रूमध्यगोचरः । मन्त्रो मन्त्रपतिर्मन्त्री मदमत्तमनोरमः ।।
मेखलावान् मन्दगतिर्मतिमत्कमलेक्षणः। महाबलो महावीर्यो महाप्राणो महामनाः ।।
यज्ञो यज्ञपतिर्यज्ञगोप्ता यज्ञफलप्रदः । यशस्करो योगगम्यो याज्ञिको याजकप्रियः ।।
रसो रसप्रियो रस्यो रञ्जको रावणार्चितः । रक्षोरक्षाकरो रत्नगर्भो राज्यसुखप्रदः ।।
लक्ष्यं लक्षप्रदो लक्ष्यो लयस्थो लड्डुकप्रियः । लानप्रियो लास्यपरो लाभकृल्लोकविश्रुतः ।।
वरेण्यो वह्निवदनो वन्द्यो वेदान्तगोचरः । विकर्त्ता विश्वतश्चक्षुर्विधाता विश्वतोमुखः ।।
वामदेवो विश्वनेता वज्रिवज्रनिवारणः । विश्वबन्धनविष्कम्भाधारो विश्वेश्वरप्रभुः ।।
शब्दब्रह्म शमप्राप्यः शम्भुशक्तिगणेश्वरः । शास्ता शिखाग्रनिलयः शरण्यःशिखरीश्वरः ।।
षड्ऋतुकुसुमस्रग्वी षडाधारः षडक्षरः । संसारवैद्यः सर्वज्ञः सर्वभेषजभेषजम् ।।
सृष्टिस्थितिलयक्रीडः सुरकुञ्जरभेदनः । सिन्दूरितमहाकुम्भः सदसद्व्यक्तिदायकः ।।
साक्षी समुद्रमथनः स्वसंवेद्यः स्वदक्षिणः । स्वतन्त्रः सत्यसङ्कल्पः सामगानरतः सुखी ।।
हंसो हस्तिपिशाचीशो हवनं हव्यकव्यभुक् । हव्यं हुतप्रियो हर्षो हल्लेखामन्त्रमध्यगः ।।

ज्ञानं च त्रिविधं राजन् ! शृणुष्व स्थिरचेतसा। त्रिधा कर्म च कर्तारं ब्रवीमि ते प्रसङ्गतः ।।१०।।
नानाविधेषु भूतेषु मामेकं वीक्षते तु यः । नाशवत्सु च नित्यं मां तज्ज्ञानं सात्त्विकं नृप ।।११।।
तेषु वेत्ति पृथग्भूतं विविधं भावमाश्रितः । मामव्ययं च तज्ज्ञानं राजसं परिकीर्तितम् ।।१२।।
हेतुहीनमसत्यं च देहात्मविषयञ्च यत् । असदल्पार्थविषयं तामसं ज्ञानमुच्यते ।।१३।।
भेदतस्त्रिविधं कर्म विद्धि राजन् ! मयेरितम् । कामनाद्वेषदम्भैर्यद्रहितं नित्यकर्म यत् ।।१४।।
कृतं विना फलेच्छां यत् कर्म सात्त्विकमुच्यते । यद् बहुक्लेशतः कर्म कृतं यच्च फलेच्छया ।।१५।।
क्रियमाणं नृभिर्दम्भात् कर्म राजसमुच्यते । अनपेक्ष्य स्वशक्तिं यदर्थक्षयकरं च यत् ।।१६।।
अज्ञानात् क्रियमाणं यत् कर्म तामसमीरितम् । कर्तारं त्रिविधं विद्धि कथ्यमानं मया नृप ।।१७।।
धैर्योत्साही समोऽसिद्धौ सिद्धौ चाविक्रियस्तु यः । अहङ्कारविमुक्तो यः स कर्ता सात्त्विको नृप ।।१८।।
कुर्वन् हर्षञ्च शोकञ्च हिंसाफलस्पृहाञ्च यः । अशुचिर्लुब्धको यस्तु राजसोऽसौ निगद्यते ।।१९।।
प्रमादाज्ञानसहितः परोच्छेदपरः शठः । अलसस्तर्कवान् यस्तु कर्ताऽसौ तामसो मतः ।।२०।।
सुखञ्च त्रिविधं राजन् ! दुःखञ्च क्रमतः शृणु । सात्त्विकं राजसं चैव तामसञ्च मयोच्यते ।।२१।।
विषवद् भासते पूर्वं दुःखस्यान्तकरञ्च यत् । इच्छ्यमानं तथा वृत्त्या यदन्तेऽमृतवद् भवेत् ।।२२।।
प्रसादात् स्वस्य बुद्धेर्यत् सात्त्विकं सुखमीरितम् । विषयाणां तु यो भोगो भासतेऽमृतवत् पुरा ।।२३।।
हालाहालमिवान्ते यद् राजसं सुखमीरितम् । तन्द्रिप्रमादसम्भूतमालस्यप्रभवञ्च यत् ।।२४।।
सर्वदा मोहकं स्वस्य सुखं तामसमीदृशम् । न तदस्ति यदेतैर्यन्मुक्तं स्यात् त्रिविधैर्गुणैः ।।२५।।
राजन् ! ब्रह्मापि त्रिविधमों तत्सदिति भेदतः ।। त्रिलोकेषु त्रिधाभूतमखिलं भूप ! वर्तते ।।२६।।
ब्रह्मक्षत्रियविट्शूद्राः स्वभावाद् भिन्नधर्मिणः । तानि तेषां तु कर्माणि संक्षेपात् तेऽधुना वदे ।।२७।।
अन्तर्बाह्येन्द्रियाणाञ्च वश्यत्वमार्जवं क्षमा । नानातपांसि शौचञ्च द्विविधं ज्ञानमात्मनः ।।२८।।
वेदशास्त्रपुराणानां स्मृतीनां ज्ञानमेव च । अनुष्ठानं तदर्थानां कर्म ब्राह्ममुदाहृतम् ।।२९।।
दार्ढ्यं शौर्यञ्च दाक्ष्यञ्च युद्धे पृष्ठाप्रदर्शनम् । शरण्यपालनं दानं धृतिस्तेजःस्वभावजम् ।।३०।।
प्रभुता मनऔन्नत्यं सुनीतिर्लोकपालनम् । पञ्चकर्माधिकारत्वं क्षत्रकर्म समीरितम् ।।३१।।
नानावस्तुक्रयो भूमेः कर्षणं रक्षणं गवाम् । त्रिधा कर्माधिकारित्वं वैश्यकर्म समीरितम् ।।३२।।
दानं द्विजानां शुश्रूषा सर्वदा शिवसेवनम् । एतादृशं नरव्याघ्र ! कर्म शौद्रमुदीरितम् ।।३३।।
स्वस्वकर्मरता एते मय्यर्प्याखिलकारिणः । मत्प्रसादात् स्थिरं स्थानं यान्ति ते परमं नृप ।।३४।।
इति ते कथितो राजन् ! प्रसादाद् योग उत्तमः। साङ्गोपाङ्गः सविस्तारोऽनादिसिद्धो मया प्रिय ।।३५।।
युङ्क्ष्व योगं मयाख्यातं नाख्यातं कस्यचिन्नृप । गोपयैनं ततः सिद्धिं परां यास्यस्यनुत्तमाम् ।।३६।।

क उवाच

इति तस्य वचः श्रुत्वा प्रसन्नस्य महात्मनः । गणेशस्य वरेण्यः स चकार च यथोदितम् ।।३७।।
त्यक्त्वा राज्यं कुटुम्बञ्च कान्तारं प्रययौ रयात् । उपदिष्टं यथायोगमास्थाय मुक्तिमाप्तवान् ।

इमं योगोत्तमं योगं शृणोति श्रद्धया तु यः ।।३८।।
सोऽपि कैवल्यमाप्नोति यथा योगी तथैव सः । य इमं श्रावयेद् योगं कृत्वाऽस्यार्थं सुबुद्धिमान् ।।३९।।
यथा योगी तथा सोऽपि परं निर्वाणमृच्छति । यो गीतां सम्यगभ्यस्य ज्ञात्वा चार्थं गुरोर्मुखाद् ।।४०।।
कृत्वा पूजां गणेशस्य प्रत्यहं पठते तु यः । एककालं द्विकालं वा त्रिकालं वापि यः पठेत् ।।४१।।
ब्रह्मीभूतस्य तस्यापि दर्शनान्मुच्यते नरः । न यज्ञैर्न व्रतैर्दानैर्नाग्निहोत्रैर्महाधनैः ।।४२।।
न वेदैः सम्यगभ्यस्तैः सम्यग्ज्ञातैः सहाङ्गकैः । पुराणश्रवणैर्नैव न शास्त्रैः साधुचिन्तनैः ।।४३।।
प्राप्यते ब्रह्म परममनया प्राप्यते नरैः । ब्रह्मघ्नो मद्यपः स्तेनो गुरुतल्पगमोऽपि यः ।।४४।।
चतुर्णां यस्तु संसर्गी महापातककारिणाम् । स्त्रीहिंसा गोवधादीनां कर्तारो ये च पापिनः ।।४५।।
ते सर्वे प्रतिमुच्यन्ते गीतामेतां पठन्ति चेत् । यः पठेत् प्रयतो नित्यं स गणेशो न संशयः ।।४६।।
चतुर्थ्यां यः पठेद् भक्त्या सोऽपि मोक्षाय कल्पते। तत्तत् क्षेत्रं समासाद्य स्नात्वाऽभ्यर्च्य गजाननम्।।४७।।
सकृद् गीतां पठेद् भक्त्या ब्रह्मभूयाय कल्पते । भाद्रे मासे सिते पक्षे चतुर्थ्यां भक्तिमान् नरः ।।४८।।
कृत्वा महीमयीं मूर्तिं गणेशस्य चतुर्भुजाम् । सवाहनां सायुधाञ्च समभ्यर्च्य यथाविधि ।।४९।।
यः पठेत् सप्तकृत्वस्तु गीतामेतां प्रयत्नतः । ददाति तस्य तुष्टोऽसौ गणेशो भोगमुत्तमम् ।।५०।।
पुत्रान् पौत्रान् धनं धान्यं पशुरत्नादिसम्पदः । विद्यार्थिनो भवेद् विद्या सुखार्थी सुखमाप्नुयात् ।।५१।।
कामानन्यॉंल्लभेत् कामी मुक्तिमन्ते प्रयान्ति ते ।।५२।।

ॐ

ॐ तत्सदिति श्रीमगणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीमदादिश्रीमन्महागाणेश्वरे महापुराणे क्रीडाखण्डे बालचरिते श्रीगजाननवरेण्यसंवादे गुणत्रयकृतियोगो नामैकादशोध्यायः ।।११।।

ॐ

इति श्रीगणेशगीता सम्पूर्णतां गता ।

ॐ

परिशिष्ट – छ

# गणेशस्तोत्रसन्दर्भ

गणेशपुराणअन्तर्गतका केही महत्त्वपूर्ण स्तोत्रहरूका साथै अन्य ग्रन्थहरूमा पाइने गणेशपरक सिद्धस्तोत्रहरू सङ्कलन गरी स्तोत्रखण्डमा प्रस्तुत गरिदैछ । यी स्तोत्रहरूको भक्तिपूर्वक पाठ गरी अर्थसमेत हृदयङ्गम गर्दा भौतिक र पारमार्थिक लाभ हुने कुरा निर्विवाद छ । भगवान् श्रीगणेशले मानिसका जीवनमा उसको कर्मअनुसार जे-जस्ता फलहरूको विधान गर्नुहुन्छ ती सबै हाम्रा निमित्त दु:खदायक अथवा सुखदायक बनेर उपस्थित हुन्छन् । कर्मअनुसार फलहरू दु:खदायक हुन्छन् भने पनि परिणामत: ती मङ्गलकारक नै हुन्छन् । भक्तिपूर्वक प्रभुको स्तोत्राराधनाबाट नवीन प्रारब्धको निर्माण हुन्छ र मनोरथसिद्धि पनि । कदाचित् प्रतिबन्धक प्रारब्ध प्रबल भएका कारण मनोरथसिद्धि नभए पनि पुण्यकर्मको पुण्यफल कहीँ जाँदैन । स्तोत्रपाठ गर्नुभन्दा पहिले विधिपूर्वक भगवान् गणेशको पूजा गरी गणेशप्रतिमा अथवा चित्रपटका सामु पवित्र स्थानमा रही शुद्ध आसनमा बस्नु पर्दछ । त्यसपछि भगवान्को ध्यान गर्दै तल दिइएका स्तोत्रहरूको प्रकृतिअनुसार आफ्नो कार्यसिद्धिका लागि कुनै एक स्तोत्रको नित्य न्यूनतम एघार आवृत्ति पाठ गर्नुपर्दछ । अधिक आवृत्ति भएमा फल पनि अधिक हुने कुरा स्वत:सिद्ध छ ।

## ६.१ गणेशपुराणबाट उद्धृत गणेशस्तोत्रहरू

### क) श्रीगणेशस्तोत्रराज

भक्तिपूर्वक भगवान् श्रीगणेशमा चित्त लगाई स्तोत्रहरूको माध्यमबाट प्रार्थना गर्दा भगवान् श्रीगणेश प्रसन्न हुनुहुन्छ । प्रेयोमार्गमा लागेका मानिसहरू अनेकौं किसिमका कामनाहरूले जेलिएका हुन्छन् । प्रारब्धवश ती कामनाहरूको पूर्तिमा विलम्ब हुन्छ । कुनै कामनाहरू त प्रारब्धको बलवत्ताका कारण अपूर्ण नै रहन्छन् । यस्तो स्थितिमा श्रीगणेशका साधकहरू निराश र दीन-हीनसमेत बन्न पुग्दछन् । यस्ता स्थितिमा श्रीगणेशस्तोत्रराजको दिनदिनै प्रात:कालमा पाठ गर्दा विलम्बले सम्भव हुने कार्यहरू शीघ्र सम्पन्न हुन्छन् र असम्भव मानिएका कार्यहरू पनि भगवान् श्रीगणेशको अपरम्पार अनुकम्पाबाट सम्भव हुन आउँछन् । तसर्थ श्रीगणेशका साधकहरूले प्रतिदिन प्रात:कालमा ब्रह्मा, विष्णु र शङ्करले प्रार्थना गर्नुभएका विषयमा आधारित यो स्तोत्रराज अवश्य पाठ गर्नुपर्दछ ।

**ब्रह्मविष्णुमहेशा ऊचु:**

**अजन्निर्विकल्पं निराकारमेकं निरानन्दमद्वैतमानन्दपूर्णम्।**
**परं निर्गुणं निर्विशेषं निरीहं परब्रह्मरूपं गणेशं भजेम ।।**

**गुणातीतमाद्यं चिदानन्दरूपं चिदाभासकं सर्वगं ज्ञानगम्यम् ।**
**मुनिध्येयमाकाशरूपं परेशं परब्रह्मरूपं गणेशं भजेम ।।**

जगत्कारणं कारणज्ञानरूपं सुरादिं सुखादिं युगादिं गणेशम् ।
जगद्व्यापिनं विश्ववन्द्यं सुरेशं परब्रह्मरूपं गणेशं भजेम ।।
रजोयोगतो ब्रह्मरूपं श्रुतिज्ञं सदा कार्यसक्तं हृदा चिन्त्यरूपम् ।
जगत्कारकं सर्वविद्यानिधानं परब्रह्मरूपं गणेशं नताः स्मः ।।
सदा सत्त्वयोगं मुदा क्रीडमानं सुरारीन् हरन्तं जगत् पालयन्तम् ।
अनेकावतारं निजाज्ञानहारं सदा विष्णुरूपं गणेशं नमामः ।।
तमोयोगिनं रुद्ररूपं त्रिनेत्रं जगद्धारकं तारकं ज्ञानहेतुम् ।
अनेकागमैः स्वं जनं बोधयन्तं सदा शर्वरूपं गणेशं नमामः ।।
तमस्तोमहारं जनाज्ञानहारं त्रयीवेदसारं परब्रह्मपारम् ।
मुनिज्ञानकारं विदूरे विकारं सदा ब्रह्मरूपं गणेशं नमामः ।।
निजैरोषधीस्तर्पयन्तं करौघैः सुरौघान् कलाभिः सुधास्राविणीभिः ।
दिनेशांशुसन्तापहारं द्विजेशं शशाङ्कस्वरूपं गणेशं नमामः ।।
प्रकाशस्वरूपं नभोवायुरूपं विकारादिहेतुं कलाकालभूतम् ।
अनेकक्रियाऽनेकशक्तिस्वरूपं सदा शक्तिरूपं गणेशं नमामः ।।
प्रधानस्वरूपं महत्तत्त्वरूपं धरावारिरूपं दिगीशादिरूपम् ।
असत्सत्स्वरूपं जगद्धेतुभूतं सदा विश्वरूपं गणेशं नताः स्मः ।।
त्वदीये मनः स्थापयेदङ्घ्रियुग्मे जनो विघ्नसङ्घान्न पीडां लभेत ।
लसत्सूर्यबिम्बे विशाले स्थितोऽयं जनो ध्वान्तबाधां कथं वा लभेत ।।
वयं भ्रामिताः सर्वथाज्ञानयोगादलब्ध्वा तवाङ्घ्रिं बहून् वर्षपूगान् ।
इदानीमवाप्तास्तवैव प्रसादात् प्रपन्नान् सदा पाहि विश्वम्भराद्य ।।

इदं यः पठेत् प्रातरुत्थाय धीमान् त्रिसन्ध्यं सदा भक्तियुक्तो विशुद्धः ।
स पुत्रान् श्रियं सर्वकामान् लभेत परब्रह्मरूपो भवेदन्तकाले ।। – ग.पु. १/१३/३-१४ १८ ।

### ख ) सङ्कष्टनाशनस्तोत्र

मानवजीवन शक्तिशाली प्रारब्धको अधीनमा गतिशील हुन्छ । आधिभौतिक, आधिदैविक र आध्यात्मिक सन्ताप र सङ्कष्ट मानवमाथि आइनै रहन्छन् । कतिपय कष्ट र विपत्तिहरू स्वप्रयासद्वारा निरस्त हुन्छन् भने कतिपय विपत्ति र सङ्कष्टहरू श्रीगणेशको उपासनाबाट निरस्त हुन सक्छन् । विघ्न र सङ्कष्टहरूको विनाशमा भगवान् श्रीगणेशको अनुपम शक्तिमत्ता रहेको हुन्छ । गणेशपुराणअन्तर्गतको यो सङ्कष्टनाशन गणेशस्तोत्र सङ्कष्टपरिहार गर्ने सन्दर्भमा अत्यन्त प्रभावकारी मानिएको छ । त्रिपुरासुरद्वारा पीडित देवताहरूले आतुरभावले गरेको श्रीगणेशको

गुणगान नै सङ्कष्टनाशन स्तोत्रको सारतत्त्व हो । दिनदिनै यो स्तोत्र पाठ गर्ने साधकले सङ्कट र विपत्ति व्यहोर्नु नपर्ने कुरा गणेशपुराणमा बताइएको छ ।

देवा ऊचुः

नमो नमस्ते परमार्थरूप ! नमो नमस्तेऽखिलकारणाय ।
नमो नमस्तेऽखिलकारकाय सर्वेन्द्रियाणामधिवासिनेऽपि ।।
नमो नमो भूतमयाय तेऽस्तु नमो नमो भूतकृते सुरेश !।
नमो नमः सर्वधियां प्रबोध ! नमो नमो विश्वलयोद्भवाय ।।
नमो नमो विश्वभृतेऽखिलेश ! नमो नमः कारणकारणाय ।
नमो नमो वेदविदामदृश्य ! नमो नमः सर्ववरप्रदाय ।।
नमो नमो वागविचारभूत ! नमो नमो विघ्ननिवारणाय ।
नमो नमोऽभक्तमनोरथघ्न ! नमो नमो भक्तमनोरथज्ञ ।।
नमो नमो भक्तमनोरथेश ! नमो नमो विश्वविधानदक्ष ! ।
नमो नमो दैत्यविनाशहेतो ! नमो नमः सङ्कटनाशकाय ।।
नमो नमः कारुणिकोत्तमाय नमो नमो ज्ञानमयाय तेऽस्तु ।
नमो नमोऽज्ञानविनाशनाय नमो नमो भक्तविभूतिदाय ।।
नमो नमोऽभक्तविभूतिहन्त्रे नमो नमो भक्तविमोचनाय ।
नमो नमो भक्तविबन्धनाय नमो नमस्ते प्रविभक्तमूर्ते ।।
नमो नमस्तत्त्वविबोधकाय नमो नमस्तत्त्वविदुत्तमाय ।
नमो नमस्तेऽखिलकर्मसाक्षिणे नमो नमस्ते गुणनायकाय ।।

गणेश उवाच

भवत्कृतमिदं स्तोत्रमतिप्रीतिकरं मम । सङ्कष्टनाशनमिति विख्यातञ्च भविष्यति ।।
पठतां शृण्वताञ्चैव सर्वकामप्रदं नृणाम् । त्रिसन्ध्यं यः पठेदेतत् सङ्कष्टं नाप्नुयात् क्वचित्।।

- ग.पु. १/४०/४२-५६ ।

## ग) सर्वकामनापूरक गणेशका द्वादशनामस्तोत्र

गणेशका निम्न निरूपित पवित्र बाह्र नामहरूको अत्यन्त विशिष्ट महिमा रहेको छ । कुनै पनि कार्यको आरम्भमा, विद्या आरम्भ गर्दा, गृहप्रवेश र गृहनिर्गमन आदि समयमा यी नामहरूको उच्चारण गर्नाले मङ्गल प्राप्त हुने कुरा गणेशपुराणमा बताइएको छ ।

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ।।
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ।।
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ।।

- ग.पु. १/९२/३६-३८ ।

### घ) सर्वकामनापूरक गणेशस्तोत्र

अहङ्कारका कारण विपत्तिमा परेका इन्द्रले गरेको स्तुति नै सर्वकामनापूरक गणेशस्तोत्र हो । जुन साधकले भक्तिपूर्वक प्रातः, मध्याह्न र सायंकालमा यस स्तोत्रको पाठ गर्दछ त्यसलाई युद्धमा कतैबाट पनि भय हुँदैन । जसले यी तीन श्लोकहरूको नित्य पाठ गर्दछ त्यो सर्वत्र विजयी हुन्छ ।

**शक्र उवाच**

**जाने न त्वाऽनन्तशक्तिं परेशं विश्वात्मानं विश्ववीजं गुणेशम्।**
**विश्वाभासं विश्ववन्द्यं त्रिसत्यं त्रेधाभूतं जन्मरक्षार्तिहेतुम्।।**
**एकं नित्यं सच्चिदानन्दरूपं सर्वाध्यक्षं कारणातीतमीशम्।**
**चेष्टाहेतुं स्थावरे जङ्गमे च वाञ्छापूरं सर्वगं त्वाऽभिवन्दे।।**
**सर्वेशानं सर्वविद्यानिधानं सर्वात्मानं सर्वबोधावभासम् ।**
**सर्वातीताऽवाङ्मनोगोचरं त्वां सर्वावासं सर्वविज्ञानमीडे।।** - ग.पु. २/११/३७-३९ ।

### ङ) दुर्जन्मनाशक गणेशस्तोत्र

शमिका र मन्दार वृक्षयोनिमा परिणत भएपछि ती दुवैको उद्धारका लागि श्रीगणेशको आराधना गर्दै तपस्या गरिरहेका औरव र शौनकलाई श्रीगणेशले कृपापूर्वक दर्शन दिनुभएको थियो । त्यस बेला ती दुवै तपस्वीहरूले श्रीगणेशको भावपूर्ण स्तुति गरे। त्यो स्तुति नै यो दुर्जन्मनाशक गणेशस्तोत्र हो । दुर्गति र दुर्योनिमा परेका प्राणीहरूको उद्धारका लागि यो स्तोत्र अमोघ उपायका रूपमा रहेको छ । यसको नित्य पाठ गर्नाले कुजन्मनाश, कामनाप्राप्ति, विजयलाभ, ऐश्वर्यप्राप्ति, आयु-आरोग्यप्राप्तिजस्ता फल प्राप्त हुन्छन् ।

**औरवशौनकौ ऊचतुः**

**विश्वस्य वीजं परमस्य पाता नानाविधानन्दकरः स्वकानाम् ।**
**निजार्चनेनादृतचेतसां त्वं विघ्नप्रहर्ता गुरुकार्यकर्ता ।।**
**परात्परस्त्वं परमार्थभूतो वेदान्तवेद्यो हृदयातिगोपी ।**
**सर्वश्रुतीनाञ्च न गोचरोऽसि नमाव इत्थं निजदैवतं त्वाम् ।।**
**न पद्मयोनिर्नहरो हरिश्च हरिः षडास्यो न सहस्रमूर्द्धा ।**
**मायाविनस्ते न विदुः स्वरूपं कथं नु शक्यं परिनिश्चितुं तत् ।।**
**तवानुकम्पा महती यदा स्याद् विभुञ्जतः कर्म शुभाशुभं स्वम् ।**
**कायेन वाचा मनसा नमेत् त्वां जीवँश्च मुक्तो नर उच्यते सः ।।**
**त्वं भावतुष्टो विदधासि कामान् नानाविधाकारतयाऽखिलानाम् ।**
**संसृत्यकूपारविमुक्तिहेतुरतो विभुं त्वां शरणं प्रपद्ये ।।**

**गणेश उवाच**

**तुष्टोऽहं परया भक्त्या तपसा परमेण च । अनया परया स्तुत्या ब्राह्मणौ ! वृणुतं वरान् ।।**
**कुजन्मनाशकमिदं मम स्तोत्रं पठेत् तु यः। त्रिसन्ध्यञ्च त्रिवारञ्च सर्वान् कामानवाप्नुयात् ।।**
**षण्मासाज्जायते विद्या लक्ष्मीर्नित्यजपादपि । पञ्चवारजपान्मर्त्य आयुरारोग्यमाप्नुयात् ।।**

- ग.पु. २/३५/४-११ ।

छ) सर्वार्थदायक गणेशस्तोत्र

श्रीगणेशको कृपाबाट उहाँको दिव्यधाम स्वानन्दभुवनको दर्शन पाई कृत-कृत्य भएका काशीराजले गरेको श्रीगणेशको स्तव नै सर्वार्थदायक गणेशस्तोत्र हो । यो स्तोत्र विघ्नविनाशक, ज्ञानदायक र मोक्षदायक पनि छ । यसको नित्य पाठ गर्ने विद्यार्थीले विद्या, धनार्थीले धन, पुत्रार्थीले पुत्र र जयार्थीले विजय प्राप्त गर्दछन् । अन्य कामना गर्ने उपासकहरूले आ-आफ्ना कामनाहरू पूर्ण तुल्याउँछन् । यस कारण यस स्तोत्रलाई सर्वार्थदायक गणेशस्तोत्र भनिएको छ ।

**काशिराज उवाच**

**नमामि ते नाथ पदारविन्दं ब्रह्मादिभिर्ध्येयतमं शिवाय ।**
**यत्पद्मपाशासिपरश्वधादि( सु )चिह्नितं विघ्नहरं निजानाम् ।।**
**यदर्च्यते विष्णुशिवादिभिः सुरैरनेककार्यार्थकरैर्नरैश्च ।**
**अनेकशो विघ्नविनाशदक्षं संसारतप्तामृतवृष्टिकारि ।।**
**नमामि ते नाथ मुखारविन्दं त्रिलोचनं वह्निरवीन्दुतारम् ।**
**कृपाकटाक्षामृतसेचनेन तापत्रयोन्मूलनदृष्टशक्ति।।**
**नमामि ते नाथ करारविन्दमनेकहेतिक्षतदैत्यसङ्घम् ।**
**अनेकभक्ताभयदं सुरेश ! संसारकूपोत्तरणावलम्बम् ।।**
**त्वमेव सत्त्वात्मतया बिभर्षि सृजस्यजो राजसतामवाप्य ।**
**तमोगुणाधारतया च हंसि चराचरं ते वशगं गणेश ।।**
**यः शुद्धचेता भजतेऽनिशं त्वामाक्रम्य विघ्नान् परिधावसि त्वम् ।**
**स त्वां वशे कृत्य सुखं हि शेते वत्सं यथा गौरिव धावसि त्वम् ।।**
**येऽन्ये भजन्तः समवाप्य तापान् संसारचक्रे बहुधा भ्रमन्तः।**
**कदापि तेऽनुग्रहमाप्य तेऽपि भजन्ति मानुष्यमवाप्य तेऽपि ।।**
**धरारजः कोऽपि मिमीत नाके तारागणं वारिमुचाञ्च धाराः।**
**नालं गुणानां गणनां हि कर्तुं शेषो विधाता तव वर्षपूगैः।।**
**निराकृतेस्ते यदि नाकृतिः स्यादुपासनाकर्मविधिर्वृथा स्यात् ।**
**गुणप्रपञ्चः प्रकृतेर्विलासो जनस्य भोगश्च तथा कथं स्यात् ।।**
**सत्सङ्गतिश्चेत् सदनुग्रहः स्यात् सत्कर्मनिष्ठा सदनुस्मृतिश्च ।**
**चित्तस्य शुद्धिर्महती कृपा ते ज्ञानं विमुक्तिश्च न दुर्लभा स्यात् ।।** - ग.पु. २/५३/२७-३६ ।

ज) सङ्कष्टनाशक गणेशस्तोत्र

दैत्यराज सिन्धुको अत्याचारबाट पीडित देवताहरूले देवगुरु बृहस्पतिको परामर्शअनुसार सङ्कष्टनाशका लागि यस स्तोत्रको पाठ गरी कृष्णपक्षको चतुर्थी तिथिमा श्रीगणेशको आराधना गरेका थिए । यसकै प्रभावबाट

तिनीहरूलाई भगवान् गणेशले दर्शन दिई यस स्तोत्रको महिमगान गर्दै भन्नुभएको थियो –

**सङ्कष्टहरमेतच्च स्तोत्रं ख्यातं भविष्यति ।**
**यः पठेत् प्रयतो नित्यं स मे मान्यो भवेत् सुराः ।।**

अर्थात् 'यो स्तोत्र सङ्कष्टनाशक स्तोत्रका रूपमा पृथिवीमा प्रसिद्ध हुनेछ । जसले सावधान भई नित्य यसको पाठ गर्नेछ, त्यो भक्त मेरा निमित्त पनि मान्य हुनेछ ।' यो स्तोत्रको पाठबाट प्रसन्न हुनुभएका श्रीगणेशले देवताहरूलाई 'मैले अब मयूरेशको रूपमा अवतार लिएर तपाईंहरूका विपत्तिनाश गर्नेछु' भन्नुभएको थियो । यस स्तोत्रको पाठबाट साधकहरूले कष्ट एवं विपत्तिहरूको नाशका साथै भुक्तिसुख र मुक्तिसुख पनि प्राप्त गर्दछन् ।

**देवा ऊचुः**

**दीननाथ ! दयासिन्धो ! योगिहृत्पद्मसंस्थित ! । अनादिमध्यरहितस्वरूपाय नमो नमः ।।**
**जगद्भास ! चिदाभास ! ज्ञानगम्य ! नमो नमः । मुनिमानसविष्टाय नमो दैत्यविघातिने ।।**
**त्रिलोकेश! गुणातीत! गुणक्षोभ! नमो नमः । त्रैलोक्यपालन! विभो! विश्वव्यापिन्! नमो नमः ।।**
**मायातीताय भक्तानां कामपूराय ते नमः । सोमसूर्याग्निनेत्राय नमो विश्वम्भराय ते ।।**
**अमेयशक्तये तुभ्यं नमस्ते चन्द्रमौलये । चन्द्रगौराय शुद्धाय शुद्धज्ञानकृते नमः ।।**

- ग.पु. २/७८/२३-२७ ।

झ ) **मयूरेशस्तोत्र**

गणेशपुराणको क्रीडाखण्डमा प्रतिपादित यस स्तोत्रलाई ब्रह्मबोधक र पापनाशक मानिएको छ । यसको पाठ गर्नाले मनुष्यहरूका सम्पूर्ण उपद्रवहरू शान्त हुन्छन् र तिनले मनोवाञ्छित फल प्राप्त गर्दछन् । सात दिनसम्म निरन्तर यसको पाठ गर्दा कारागारमा रहेका मनुष्यहरूलाई पनि छुटाउन सकिन्छ । यस मङ्गलमय स्तोत्रको पाठबाट शरीरका रोग र मनका चिन्ता नष्ट हुन्छन् । वास्तवमा यो स्तोत्र भोग एवं मोक्षदायक मानिएको छ ।

**ब्रह्मोवाच**

**पुराणपुरुषं देवं नानाक्रीडाकरं मुदा । मायाविनं दुर्विभाव्यं मयूरेशं नमाम्यहम् ।।**
**परात्परं चिदानन्दं निर्विकारं हृदि स्थितम् । गुणातीतं गुणमयं मयूरेशं नमाम्यहम् ।।**
**सृजन्तं पालयन्तं च संहरन्तं निजेच्छया । सर्वविघ्नहरं देवं मयूरेशं नमाम्यहम् ।।**
**नानादैत्यनिहन्तारं नानारूपाणि बिभ्रतम् । नानायुधधरं भक्त्या मयूरेशं नमाम्यहम् ।।**
**इन्द्रादिदेवतावृन्दैरभिष्टुतमहर्निशम् । सदसद्व्यक्तमव्यक्तं मयूरेशं नमाम्यहम् ।।**
**सर्वशक्तिमयं देवं सर्वरूपधरं विभुम् । सर्वविद्याप्रवक्तारं मयूरेशं नमाम्यहम् ।।**
**पार्वतीनन्दनं शम्भोरानन्दपरिवर्धनम् । भक्तानन्दकरं नित्यं मयूरेशं नमाम्यहम् ।।**
**मुनिध्येयं मुनिनुतं मुनिकामप्रपूरकम् । समष्टिव्यष्टिरूपं त्वां मयूरेशं नमाम्यहम् ।।**
**सर्वाऽज्ञाननिहन्तारं सर्वज्ञानकरं शुचिम् । सत्यज्ञानमयं सत्यं मयूरेशं नमाम्यहम् ।।**
**अनेककोटिब्रह्माण्डनायकं जगदीश्वरम् । अनन्तविभवं विष्णुं मयूरेशं नमाम्यहम् ।।**

मयूरेश उवाच

इदं ब्रह्मकरं स्तोत्रं सर्वपापप्रणाशनम् । सर्वकामप्रदं नृणां सर्वोपद्रवनाशनम् ।।
कारागृहगतानां च मोचनं दिनसप्तकात् । आधिव्याधिहरं चैव भुक्तिमुक्तिप्रदं शुभम् ।

- ग.पु. २/१०४/३-१२, २० ।

## त्र ) असाध्यसाधक गणेशस्तोत्र

श्रीगणेशले दैत्यराज सिन्धुको वध गर्नुभएपछि देवता, ऋषि, गन्धर्व, अप्सरा आदि सबैले भगवान् गणेशको जुन स्तुति गरेका थिए त्यो नै असाध्यसाधक गणेशस्तोत्रका रूपमा प्रसिद्ध छ । जसले नित्य यस स्तोत्रको पाठ गर्दछ त्यसका सबै चिताएका कुरा पूर्ण हुन्छन्, त्यसले सर्वत्र विजय प्राप्त गर्दछ, परम दुर्लभ ऐश्वर्य प्राप्त गर्दछ, संसारलाई आफ्नो वशवर्ती तुल्याउँछ र समृद्धिपूर्ण पारिवारिक जीवनयापन गर्दछ । एक हजार पटक यस स्तोत्रको आवृत्ति गर्नाले कारागारमा रहेको बन्दी बन्धनबाट मुक्त हुन्छ । दश हजार पटक आवृत्ति गरेपछि मानिसले संसारमा गर्नै नसकिने असाध्य मानिएको विषयलाई पनि साध्य तुल्याउँछ ।

देवादय ऊचुः

परब्रह्मरूपं चिदानन्दरूपं सदानन्दरूपं सुरेशं परेशम्।
गुणाब्धिं गुणेशं गुणातीतमीशं मयूरेशमाद्यं नताः स्मो नताः स्मः।।
जगद्वन्द्यमेकं परोङ्कारमेकं गुणानां परं कारणं निर्विकल्पम्।
जगत्पालकं हारकं तारकं तं मयूरेशमाद्यं नताः स्मो नताः स्मः।।
महादेवसूनुं महादैत्यनाशं महापूरुषं सर्वदा विघ्ननाशम्।
सदा भक्तपोषं परं ज्ञानकोशं मयूरेशमाद्यं नताः स्मो नताः स्मः।।
अनादिं गुणादिं सुरादिं शिवाया महातोषदं सर्वदा सर्ववन्द्यम्।
सुरार्यन्तकं भुक्तिमुक्तिप्रदं तं मयूरेशमाद्यं नताः स्मो नताः स्मः।।
परं मायिनं मायिनामप्यगम्यं मुनिध्येयमाकाशकल्पं जनेशम्।
असङ्ख्यावतारं निजाज्ञाननाशं मयूरेशमाद्यं नताः स्मो नताः स्मः।।
अनेकक्रियाकारणं श्रुत्यगम्यं त्रयीबोधितानेककर्मादिबीजम् ।
क्रियासिद्धिहेतुं सुरेन्द्रादिसेव्यं मयूरेशमाद्यं नताः स्मो नताः स्मः ।।
महाकालरूपं निमेषादिरूपं कलाकल्परूपं सदागम्यरूपम् ।
जनज्ञानहेतुं नृणां सिद्धिदं तं मयूरेशमाद्यं नताः स्मो नताः स्मः ।।
महेशादिदेवैः सदा सेव्यपादं सदा रक्षकं योगिनां चित्स्वरूपम् ।
सदाकामरूपं कृपाम्भोनिधिं तं मयूरेशमाद्यं नताः स्मो नताः स्मः ।।
सदा भक्तानां त्वं प्रसभपरमानन्दसुखदो
यतस्त्वं लोकानां परमकरुणामाशु तनुषे ।
षडूर्मीणां वेगं सुरवर ! सदा नाशय विभो !
ततो मुक्तिः श्लाघ्या तव भजनतोऽनन्तसुखदात्।।

किमस्माभिः स्तोत्रं गजवदन ! ते शक्यमतुलं
विधातुं वा रम्यं गुणनिधिरसि प्रेम जगताम् ।
न चास्माकं शक्तिस्तव गुणगणं वर्णितुमहो
त्वदीयोऽयं वारां निधिरिव जगत्सर्जनविधिः ।।

क उवाच

मयूरेशं नमस्कृत्य ततस्तेऽप्यब्रुवँश्च तम् । इदं यः पठते स्तोत्रं स कामाँल्लभतेऽखिलान् ।।
सहस्रावर्तनात् कारागृहस्थं मोचयेज्जनम् । अयुतावर्तनान्मर्त्योऽसाध्यं यत् साधयेत् क्षणात्।।
सर्वत्र जयमाप्नोति श्रियं परमदुर्लभाम् । पुत्रबान्धववाँश्चैव वशतामखिलं नयेत् ।।

– ग.पु. २/१२३/४०–५७ ।

## ६.२ ग्रन्थान्तरबाट उद्धृत गणेशस्तोत्रहरू

### क ) प्रातःस्मरणस्तोत्र

प्रातःस्मरणका यी तीन पद्यहरूको पाठबाट साधकले परम आत्मशान्ति प्राप्त गर्दछ । मानसिक शान्ति र आत्मशान्तिको कामना गर्ने मानिसहरूले प्रातःकालमा शुद्ध भई श्रीगणेशको चिन्तन गर्दै तल लेखिएका तीन पद्यहरूको पाठ गर्नुपर्दछ ।

प्रातः स्मरामि गणनाथमनाथबन्धुं सिन्दूरपूरपरिशोभितगण्डयुग्म् ।
उद्दण्डविघ्नपरिखण्डनचण्डदण्डमाखण्डलादिसुरनायकवृन्दवन्द्यम् ।।
प्रातर्नमामि चतुराननवन्द्यमानमिच्छानुकूलमखिलं च वरं ददानम् ।
तं तुन्दिलं द्विरसनाधिपयज्ञसूत्रं पुत्रं विलासचतुरं शिवयोः शिवाय ।।
प्रातर्भजाम्यभयदं खलु भक्तशोकदावानलं गणविभुं वरकुञ्जरास्यम् ।
अज्ञानकाननविनाशनहव्यवाहमुत्साहवर्धनमहं सुतमीश्वरस्य ।।
श्लोकत्रयमिदं पुण्यं सदा साम्राज्यदायकम् । प्रातरुत्थाय सततं यः पठेत् प्रयतः पुमान् ।।

### ख ) मङ्गलस्तोत्र

सबैलाई अनुकूल एवं सौहार्दपूर्ण बनाउन, विघ्ननिवारण गर्न र सर्वत्र मङ्गलदर्शन गर्न साधकले यस स्तोत्रको नित्य पाठ गर्नुपर्दछ ।

गणपतिर्विघ्नराजो लम्बतुण्डो गजाननः । द्वैमातुरश्च हेरम्ब एकदन्तो गणाधिपः ।।
विनायकश्चारुकर्णः पशुपालो भवात्मजः । द्वादशैतानि नामानि प्रातरुत्थाय यः पठेत् ।।
विश्वं तस्य भवेद्वश्यं न च विघ्नं भवेत् क्वचित् । – पद्मपुराण, सृष्टिखण्ड, ६१/३१–३३ ।

### ग ) वाल्मीकिरचित कव्यष्टक

भक्तिभावले ओतप्रोत भई जुन साधकले वाल्मीकिद्वारा रचित कव्यष्टकको पाठ गर्दछन् तिनले श्रीगणेशको

कृपा-प्रसादबाट कवित्व, सुन्दर एवं अद्‌भुत वाणी प्राप्त गर्दछन् र मानवजीवनको चरम लक्ष्य पनि प्राप्त गर्दछन्।

**वाल्मीकिरुवाच**

**चतुःषष्टिकोट्याख्यविद्याप्रदं त्वां सुराचार्यविद्याप्रदानाप्रदानम् ।**
**कठाभीष्टविद्यार्पकं दन्तयुग्मं कविं बुद्धिनाथं कवीनां नमामि ।।**
**स्वनाथं प्रधानं महाविघ्ननाथं निजेच्छाविसृष्टाण्डवृन्देशनाथम् ।**
**प्रभुं दक्षिणास्यस्य विद्याप्रदं त्वां कविं बुद्धिनाथं कवीनां नमामि ।।**
**विभो व्यासशिष्यादिविद्याविशिष्टप्रियानेकविद्याप्रदातारमाद्यम् ।**
**महाशाक्तदीक्षागुरुं श्रेष्ठदं त्वां कविं बुद्धिनाथं कवीनां नमामि ।।**
**विधात्रे त्रयीमुख्यवेदांश्च योगं महाविष्णवे चागमान् शङ्कराय ।**
**दिशन्तं च सूर्याय विद्यारहस्यं कविं बुद्धिनाथं कवीनां नमामि ।।**
**महाबुद्धिपुत्राय चैकं पुराणं दिशन्तं गजास्यस्य माहात्म्ययुक्तम् ।**
**निजज्ञानशक्त्या समेतं पुराणं कविं बुद्धिनाथं कवीनां नमामि ।।**
**त्रयीशीर्षसारं रुचानेकमारं रमाबुद्धिदारं परं ब्रह्मपारम् ।**
**सुरस्तोमकायं गणौघाधिनाथं कविं बुद्धिनाथं कवीनां नमामि ।।**
**चिदानन्दरूपं मुनिध्येयरूपं गुणातीतमीशं सुरेशं गणेशम् ।**
**धरानन्दलोकादिवासप्रियं त्वां कविं बुद्धिनाथं कवीनां नमामि ।।**
**अनेकप्रतारं सुरक्ताब्जहारं परं निर्गुणं विश्वसद्ब्रह्मरूपम् ।**
**महावाक्यसन्दोहतात्पर्यमूर्तिं कविं बुद्धिनाथं कवीनां नमामि ।।**
**इदं ये तु कव्यष्टकं भक्तियुक्तास्त्रिसन्ध्ये पठन्ते गजास्यं स्मरन्तः ।**
**कवित्वं सुवाक्यार्थमत्यद्भुतं ते लभन्ते प्रसादाद् गणेशस्य मुक्तिम् ।।**

- कल्याण, 'गणेश अङ्क'बाट उद्‌घृत ।

## घ) श्रीमुद्गलपुराणोक्त एकदन्तशरणागतिस्तोत्र

एकदन्त शरणागति स्तोत्र पाठ गर्दा भगवान् गणेश प्रसन्न हुनुहुन्छ । यस स्तोत्रको पाठबाट साधकले अनेकथरिका सिद्धि प्राप्त गर्न सक्दछ । साधकले जुन-जुन कुराको कामना गर्दछ, ती ती कुराहरू यसबाट परिपूर्ण हुन्छन् । पुत्र, पौत्र, पत्नी, धन-धान्य, हात्ती, घोडा आदि विषयका साथै साधकले राज्यभोग पनि प्राप्त गर्दछ । यस स्तोत्रलाई नित्य पाठ गर्ने साधकले भुक्तिसुखका साथै परमशान्तिदायक मुक्तिसुख पनि प्राप्त गर्दछ । शत्रुबाट गरिएका मारण, उच्चाटन, स्तम्भन र मोहन आदि प्रयोग पनि भगवान् गणेशको कृपाबाट सफल हुँदैनन् । यसको नित्य पाठ गर्ने साधक सम्पूर्ण बन्धनहरूबाट मुक्त हुन्छ । जसले श्रीगणेशको स्मरण गर्दै यी एक्काइस श्लोकहरूको एक्काइस दिनसम्म दिनदिनै एक्काइस पटक पाठ गर्दछ त्यसका लागि तीन लोकमा कुनै पनि विषय दुर्लभ हुँदैन। त्यसका असाध्य विषय पनि सिद्ध हुन्छन् र त्यो मानिस सर्वत्र विजयी हुन्छ । जसले एकदन्तशरणागतिस्तोत्रको दिनदिनै पाठ गर्दछ त्यो ब्रह्मरूप हुन्छ । त्यसको दर्शनबाट देवताहरू पनि पवित्र हुन्छन् ।

देवर्षय ऊचुः

सदात्मरूपं सकलादिभूतममायिनं सोऽहमचिन्त्यबोधम् ।
अनादिमध्यान्तविहीनमेकं तमेकदन्तं शरणं व्रजामः ।।
अनन्तचिद्रूपमयं गणेशमभेदभेदादिविहीनमाद्यम् ।
हृदि प्रकाशस्य धरं स्वधीस्थं तमेकदन्तं शरणं व्रजामः ।।
समाधिसंस्थं हृदि योगिनां यं प्रकाशरूपेण विभातमेतम् ।
सदा निरालम्बसमाधिगम्यं तमेकदन्तं शरणं व्रजामः ।।
स्वबिम्बभावेन विलासयुक्तां प्रत्यक्षमायां विविधस्वरूपाम् ।
स्ववीर्यकं तत्र ददाति यो वै तमेकदन्तं शरणं व्रजामः ।।
त्वदीयवीर्येण समर्थभूतस्वमायया संरचितं च विश्वम् ।
तुरीयकं ह्यात्मप्रतीतिसंज्ञं तमेकदन्तं शरणं व्रजामः ।।
त्वदीयसत्ताधरमेकदन्तं गुणेश्वरं यं गुणबोधितारम् ।
भजन्तमत्यन्तमजं त्रिसंस्थं तमेकदन्तं शरणं व्रजामः ।।
ततस्त्वया प्रेरितनादकेन सुषुप्तिसंज्ञं रचितं जगद् वै ।
समानरूपं ह्युभयत्रसंस्थं तमेकदन्तं शरणं व्रजामः ।।
तदेव विश्वं कृपया प्रभूतं द्विभावमादौ तमसा विभान्तम् ।
अनेकरूपं च तथैकभूतं तमेकदन्तं शरणं व्रजामः ।।
ततस्त्वया प्रेरितकेन सृष्टं बभूव सूक्ष्मं जगदेकसंस्थम् ।
सुसात्त्विकं स्वप्नमनन्तमाद्यं तमेकदन्तं शरणं व्रजामः ।।
तदेव स्वप्नं तपसा गणेश सुसिद्धरूपं विविधं बभूव ।
सदैकरूपं कृपया च तेऽद्य तमेकदन्तं शरणं व्रजामः ।।
त्वदाज्ञया तेन त्वया हृदिस्थं तथा सुसृष्टं जगदंशरूपम् ।
विभिन्नजाग्रन्मयमप्रमेयं तमेकदन्तं शरणं व्रजामः ।।
तदेव जाग्रद्रजसा विभातं विलोकितं त्वत्कृपया स्मृतेन ।
बभूव भिन्नं च सदैकरूपं तमेकदन्तं शरणं व्रजामः ।।
सदेव सृष्ट्वा प्रकृतिस्वभावात्तदन्तरे त्वं च विभासि नित्यम् ।
धियः प्रदाता गणनाथ एकस्तमेकदन्तं शरणं व्रजामः ।।
त्वदाज्ञया भान्ति ग्रहाश्च सर्वे प्रकाशरूपाणि विभान्ति खे वै ।
भ्रमन्ति नित्यं स्वविहारकार्यास्तमेकदन्तं शरणं व्रजामः ।।
त्वदाज्ञया सृष्टिकरो विधाता त्वदाज्ञया पालक एकविष्णुः ।
त्वदाज्ञया संहरको हरोऽपि तमेकदन्तं शरणं व्रजामः ।।
यदाज्ञया भूमिजलेऽत्र संस्थे यदाज्ञयापः प्रवहन्ति नद्यः ।
स्वतीर्थसंस्थश्च कृतः समुद्रस्तमेकदन्तं शरणं व्रजामः ।।

यदाज्ञया देवगणा दिविस्था ददन्ति वै कर्मफलानि नित्यम् ।
यदाज्ञया शैलगणाः स्थिरा वै तमेकदन्तं शरणं व्रजामः ।।
यदाज्ञया शेषधराधरो वै यदाज्ञया मोहप्रदश्च कामः ।
यदाज्ञया कालधरोऽर्यमा च तमेकदन्तं शरणं व्रजामः ।।
यदाज्ञया वाति विभाति वायुर्यदाज्ञयाग्निर्जठरादिसंस्थः ।
यदाज्ञयेदं सचराचरं च तमेकदन्तं शरणं व्रजामः ।।
यदन्तरे संस्थितमेकदन्तस्तदाज्ञया सर्वमिदं विभाति ।
अनन्तरूपं हृदि बोधकं यस्तमेकदन्तं शरणं व्रजामः ।।
सुयोगिनो योगबलेन साध्यं प्रकुर्वते कः स्तवनेन स्तौति ।
अतः प्रणामेन सुसिद्धिदोऽस्तु तमेकदन्तं शरणं व्रजामः ।।

गृत्समद उवाच

एवं स्तुत्वा गणेशानं देवाः समुनयः प्रभुम् । तूष्णींभावं प्रपद्यैव ननृतुर्हर्षसंयुताः ।।
स तानुवाच प्रीतात्मा देवर्षीणां स्तवेन वै । एकदन्तो महाभागो देवर्षीन् भक्तवत्सलः ।।

एकदन्त उवाच

स्तोत्रेणाहं प्रसन्नोऽस्मि सुराः सर्षिगणाः किल । वरदोऽहं वृणुत वो दास्यामि मनसीप्सितम् ।।
भवत्कृतं मदीयं यत् स्तोत्रं प्रीतिप्रदं च तत् । भविष्यति न सन्देहः सर्वसिद्धिप्रदायकम् ।।
यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठतः । पुत्रपौत्रादिकं सर्वं कलत्रं धनधान्यकम् ।।
गजाश्वादिकमत्यन्तं राज्यभोगादिकं ध्रुवम् । भुक्तिं मुक्तिं च योगं वै लभते शान्तिदायकम् ।।
मारणोच्चाटनादीनि राजबन्धादिकं च यत् । पठतां शृण्वतां नृणां भवेच्च बन्धहीनता ।।
एकविंशतिवारं यः श्लोकानेवैकविंशतीन् । पठेच्च हृदि मां स्मृत्वा दिनानि त्वेकविंशतिम् ।।
न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु वै भवेत् । असाध्यं साधयेन्मर्त्यः सर्वत्र विजयी भवेत् ।।
नित्यं यः पठति स्तोत्रं ब्रह्मभूतः स वै नरः । तस्य दर्शनतः सर्वे देवाः पूता भवन्ति च ।।

– कल्याण, 'गणेश अङ्क'बाट उद्धृत ।

ङ) विघ्ननाशकस्तोत्र

यस उत्तम स्तोत्रलाई पुण्यदायक, विघ्नविनाशक र शोकनाशक मानिएको छ । जसले प्रातःकालमा उठी नित्य यस स्तोत्रको पाठ गर्दछ त्यो सम्पूर्ण विघ्नहरूबाट मुक्त हुन्छ ।

श्रीराधिकोवाच

परं धाम परं ब्रह्म परेशं परमीश्वरम् । विघ्ननिघ्नकरं शान्तं पुष्टं कान्तमनन्तकम् ।।
सुरासुरेन्द्रैः सिद्धेन्द्रैः स्तुतं स्तौमि परात्परम् । सुरपद्मदिनेशं च गणेशं मङ्गलायनम् ।।
इदं स्तोत्रं महापुण्यं विघ्नशोकहरं परम् । यः पठेत् प्रातरुत्थाय सर्वविघ्नात् प्रमुच्यते ।।

– ब्रह्मवैवर्तपुराण, श्रीकृष्णजन्मखण्ड १२१/१०३-१०५ ।

## च) नारदपुराणोक्त सङ्कटनाशनस्तोत्र

जसले सङ्कष्टनाशक स्तोत्रमा उल्लेख गरिएका भगवान् गणेशका बाह्र नामहरूको नित्य पाठ गर्दछ त्यसलाई विघ्नबाट भय हुँदैन । यी नामहरूको स्मरणबाट सबै प्रकारका सिद्धि प्राप्त हुन्छन् । उक्त नामहरूको जपबाट विद्यार्थीले विद्या, धनार्थीले धन, पुत्रार्थीले पुत्र र मोक्षार्थीले मोक्ष प्राप्त गर्दछ । जसले नित्य यस स्तोत्रको पाठ गर्दछ त्यसले ६ महिनाभित्र अभीष्टफल प्राप्त गर्दछ । एक वर्षसम्म निरन्तर यी नामहरूको पाठ गर्ने साधकले सिद्धि प्राप्त गर्दछ भन्ने कुरामा सन्देह छैन । जसले यो स्तोत्र लेखेर आठ जना ब्राह्मणहरूलाई अर्पण गर्दछ त्यसले श्रीगणेशको कृपाबाट सम्पूर्ण विद्या प्राप्त गर्दछ ।

नारद उवाच

**प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् । भक्तावासं स्मरेन्नित्यमायु:कामार्थसिद्धये ।।**
**प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् । तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ।।**
**लम्बोदरं पञ्चमं च षष्ठं विकटमेव च । सप्तमं विघ्नराजेन्द्रं धूम्रवर्णं तथाष्टमम् ।।**
**नवमं भालचन्द्रं च दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं तु गजाननम् ।।**
**द्वादशैतानि नामानि त्रिसन्ध्यं य: पठेन्नर: । न च विघ्नभयं तस्य सर्वसिद्धिकरं परम् ।।**
**विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रान् मोक्षार्थी लभते गतिम् ।।**
**जपेद् गणपतिस्तोत्रं षड्भिर्मासै: फलं लभेत् । संवत्सरेण सिद्धिं च लभते नात्र संशय: ।।**
**अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा य: समर्पयेत् । तस्य विद्या भवेत् सर्वा गणेशस्य प्रसादत: ।।**

## छ) सन्तानगणपतिस्तोत्र

यस स्तोत्रको निरन्तर पाठ गर्नाले अपुत्रहरूले पुत्र प्राप्त गर्दछन् र कुनै पनि साधकले समस्त सिद्धि हस्तगत गर्दछ ।

**नमोऽस्तु गणनाथाय सिद्धिबुद्धियुताय च । सर्वप्रदाय देवाय पुत्रवृद्धिप्रदाय च ।।**
**गुरूदराय गुरवे गोप्त्रे गुह्यासिताय ते । गोप्याय गोपिताशेषभुवनाय चिदात्मने ।।**
**विश्वमूलाय भव्याय विश्वसृष्टिकराय ते । नमो नमस्ते सत्याय सत्यपूर्णाय शुण्डिने ।।**
**एकदन्ताय शुद्धाय सुमुखाय नमो नम: । प्रपन्नजनपालाय प्रणतार्तिविनाशिने ।।**
**शरणं भव देवेश सन्ततिं सुदृढां कुरु । भविष्यन्ति च ये पुत्रा मत्कुले गणनायक ।।**
**ते सर्वे तव पूजार्थं निरता: स्युर्वरो मत: । पुत्रप्रदमिदं स्तोत्रं सर्वसिद्धिप्रदायकम् ।।**

– कल्याण, 'गणेश अङ्क'बाट उद्धृत ।

## ज) श्रीमच्छङ्कराचार्यकृत श्रीगणाधिपस्तोत्र

यो गणाधिपपञ्चक स्तोत्र अमोघ सिद्धि प्रदायक छ। जसले श्रीगणेशलाई प्रणाम गर्दै प्रसन्नतापूर्वक निरन्तर यस स्तोत्रको पाठ गर्दछन् ती विद्वान्हरूद्वारा प्रशंसित र ऐश्वर्यसम्पन्न पुरुषका रूपमा संसारमा विख्यात हुन्छन् । यसको निरन्तर पाठ गर्ने साधकहरू दीर्घायु, श्रीसम्पत्तिसम्पन्न र सुन्दर सन्ततिद्वारा शोभायमान हुन्छन् ।

सरागिलोकदुर्लभं विरागिलोकपूजितं सुरासुरैर्नमस्कृतं जरादिमृत्युनाशकम् ।
गिरा गुरुं श्रिया हरिं जयन्ति यत्पदार्चका नमामि तं गणाधिपं कृपापय:पयोनिधिम् ।।
गिरीन्द्रजामुखाम्बुजप्रमोददानभास्करं करीन्द्रवक्त्रमानताघसंघवारणोद्यतम् ।
सरीसृपेशबद्धकुक्षिमाश्रयामि सन्ततं शरीरकान्तिनिर्जिताब्जबन्धुबालसन्ततिम् ।।
शुकादिमौनिवन्दितं गकारवाच्यमक्षरं प्रकाममिष्टदायिनं सकामनम्रपङ्क्तये ।
चकासनं चतुर्भुजैर्विकासिपद्मपूजितं प्रकाशितात्मतत्त्वकं नमाम्यहं गणाधिपम् ।।
नराधिपत्वदायकं स्वरादिलोकदायकं जरादिरोगवारकं निराकृतासुरव्रजम् ।
कराम्बुजैर्धरन् सृणीन् विकारशून्यमानसैर्हृदा सदा विभावितं मुदा नमामि विघ्नपम् ।।
श्रमापनोदनक्षमं समाहितान्तरात्मना समाधिभि: सदार्चितं क्षमानिधिं गणाधिपम् ।
रमाधवादिपूजितं यमान्तकात्मसम्भवं शमादिषड्गुणप्रदं नमामि तं विभूतये ।।
गणाधिपस्य पञ्चकं नृणामभीष्टदायकं प्रणामपूर्वकं जना: पठन्ति ये मुदा युता: ।
भवन्ति ते विदाम्पुर: प्रगीतवैभवा: जनाश्चिरायुषोऽधिकश्रिय: सुसूनवो न संशय: ।।

- कल्याण, 'गणेश अङ्क'बाट उद्धृत ।

झ) गणपतिस्तोत्र

जुन साधकले यो मन्त्रमय गणपतिस्तोत्र भक्तिपूर्वक नित्य पाठ गर्दछ त्यसको शरीरमा शोभा र घरमा लक्ष्मीको बास हुन्छ ।

ॐ नमो विघ्नराजाय सर्वसौख्यप्रदायिने । दुष्टारिष्टविनाशाय पराय परमात्मने ।।
लम्बोदरं महावीर्यं नागयज्ञोपशोभितम् । अर्धचन्द्रधरं देवं विघ्नव्यूहविनाशनम् ।।
ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्र: हेरम्बाय नमो नम: । सर्वसिद्धिप्रदोऽसि त्वं सिद्धिबुद्धिप्रदो भव ।।
चिन्तितार्थप्रदस्त्वं हि सततं मोदकप्रिय: । सिन्दूरारुणवस्त्रैश्च पूजितो वरदायक: ।।
इदं गणपतिस्तोत्रं य: पठेद् भक्तिमान् नर: । तस्य देहं च गेहं च स्वयं लक्ष्मीर्न मुञ्चति ।।

- शाक्तप्रमोदबाट उद्धृत ।

ञ) श्रीमच्छङ्कराचार्यकृत गणेशस्तोत्र

यो गणपतिस्तोत्र दरिद्रतानाशक र अभीष्टदायक छ । जुन साधकले निरन्तर आदरपूर्वक यस स्तोत्रको पाठ गर्दछ त्यो साधक भगवान् ओङ्कारस्वरूप श्रीगणेशको कृपाबाट पुत्रवान् हुन्छ र पत्नी एवं परिवारप्रति करुणा, मैत्री तथा आदरभावले सम्पन्न बन्दछ ।

सुवर्णवर्णसुन्दरं सितैकदन्तबन्धुरं गृहीतपाशकाङ्कुशं वरप्रदाभयप्रदम् ।
चतुर्भुजं त्रिलोचनं भुजङ्गमोपवीतिनं प्रफुल्लवारिजासनं भजामि सिन्धुराननम् ।।
किरीटहारकुण्डलं प्रदीप्तबाहुभूषणं प्रचण्डरत्नकङ्कणप्रशोभिताङ्घ्रियष्टिकम् ।
प्रभातसूर्यसुन्दराम्बरद्वयप्रधारिणं सरत्नहेमनूपुरप्रशोभिताङ्घ्रिपङ्कजम् ।।

सुवर्णदण्डमण्डितप्रचण्डचारुचामरं गृहप्रदेन्दुसुन्दरं युगक्षणप्रमोदितम् ।
कवीन्द्रचित्तरञ्जकं महाविपत्तिभञ्जकं षडक्षरस्वरूपिणं भजे गजेन्द्ररूपिणम् ।।
विरिञ्चिविष्णुवन्दितं विरूपलोचनस्तुतं गिरीशदर्शनेच्छया समर्पितं पराम्बया ।
निरन्तरं सुरासुरैः सपुत्रवामलोचनैर्महामखेष्टकर्मसु स्मृतं भजामि तुन्दिलम् ।।
मदौघलुब्धचञ्चलालिमञ्जुगुञ्जितारवं प्रबुद्धचित्तरञ्जकं प्रमोदकर्णचालकम् ।
अनन्यभक्तिमानवं प्रचण्डमुक्तिदायकं नमामि नित्यमादरेण वक्रतुण्डनायकम् ।।
दारिद्र्यविद्रावणमाशु कामदं स्तोत्रं पठेदेतदजस्रमादरात् ।
पुत्री कलत्रस्वजनेषु मैत्री पुमान् भवेदेकवरप्रसादात् ।।

– कल्याण, 'गणेश अङ्क'बाट उद्धृत ।

### ट) श्रीमुद्गलपुराणोक्त गजाननस्तोत्र

यो स्तोत्र सर्वसिद्धिदायक छ । यो स्तोत्र निरन्तर पाठ गर्ने साधकका हृदयमा भगवान् श्रीगणेशप्रति भक्तिभावको उत्कर्ष भइरहन्छ । यसको पाठबाट पुत्र, पौत्र, धन, धान्य, सकल सम्पत्ति प्राप्त हुन्छन् । साधकप्रति विरोधीहरूले प्रयोग गरेका मारण, मोहन, स्तम्भन, उच्चाटनजस्ता घातक प्रयोगहरूको प्रभाव नष्ट हुन्छ । जीवनमा कहिले पनि अमङ्गल व्यहोर्नु पर्दैन । यसको निरन्तर पाठ गर्ने वीरहरूले सङ्ग्राममा विजय प्राप्त गर्दछन् । यो स्तोत्र पाठ गरेर यात्रा गर्दा उत्तम फल प्राप्ति हुन्छ । यस स्तोत्रको पाठ गरेमा कारागारमा रहेको बन्दी अतिशीघ्र त्यहाँबाट मुक्त हुन्छ। यस स्तोत्रबाट असाध्य लक्ष्य पनि सिद्ध हुन्छ । एक्काइस दिनसम्म प्रतिदिन निरन्तर एक्काइस पटक पाठ गर्ने साधक सम्पूर्ण सिद्धिहरूको स्वामी बन्दछ । यो स्तोत्र धर्म, अर्थ, काम, मोक्षजस्ता पुरुषार्थ प्रदायक हुनुका साथै उत्तम साधकलाई यसले ब्रह्मभावमा पुऱ्याउँछ ।

देवर्षय ऊचुः

विदेहरूपं भवबन्धहारं सदा स्वनिष्ठं स्वसुखप्रदं तम् ।
अमेयसाङ्ख्येन च लक्ष्यमीशं गजाननं भक्तियुतं भजामः ।।
मुनीन्द्रवन्द्यं विधिबोधहीनं सुबुद्धिदं बुद्धिधरं प्रशान्तम् ।
विकारहीनं सकलाङ्गकं वै गजाननं भक्तियुतं भजामः ।।
अमेयरूपं हृदि संस्थितं तं ब्रह्माहमेकं भ्रमनाशकारम् ।
अनादिमध्यान्तमपाररूपं गजाननं भक्तियुतं भजामः ।।
जगत्प्रमाणं जगदीशमेवमगम्यमाद्यं जगदादिहीनम् ।
अनात्मनां मोहप्रदं पुराणं गजाननं भक्तियुतं भजामः ।।
न पृथ्विरूपं न जलप्रकाशं न तेजसंस्थं न समीरसंस्थम् ।
न खे गतं पञ्चविभूतिहीनं गजाननं भक्तियुतं भजामः ।
न विश्वगं तैजसगं न प्राज्ञं समष्टिव्यष्टिस्थमनन्तगं तम् ।
गुणैर्विहीनं परमार्थभूतं गजाननं भक्तियुतं भजामः ।।
गुणेशगं नैव च बिन्दुसंस्थं न देहिनं बोधमयं न ढुण्ढिम् ।
सुयोगहीनं प्रवदन्ति तत्स्थं गजाननं भक्तियुतं भजामः ।।

अनागतं ग्रैवगतं गणेशं कथं तदाकारमयं वदामः ।
तथापि सर्वं प्रतिदेहसंस्थं गजाननं भक्तियुतं भजामः ।।
यदि त्वया नाथ धृतं न किञ्चित्तदा कथं सर्वमिदं भजामि ।
अतो महात्मानमचिन्त्यमेवं गजाननं भक्तियुतं भजामः ।।
सुसिद्धिदं भक्तजनस्य देवं सकामिकानामिह सौख्यदं तम् ।
अकामिकानां भवबन्धहारं गजाननं भक्तियुतं भजामः ।।
सुरेन्द्रसेव्यं ह्यसुरैः सुसेव्यं समानभावेन विराजयन्तम् ।
अनन्तबाहुं मुषकध्वजं तं गजाननं भक्तियुतं भजामः ।।
सदा सुखानन्दमयं जले च समुद्रजे इक्षुरसे निवासम् ।
द्वन्द्वस्य यानेन च नाशरूपं गजाननं भक्तियुतं भजामः ।।
चतुःपदार्था विविधप्रकाशास्त एव हस्ताः स चतुर्भुजं तम् ।
अनाथनाथं च महोदरं वै गजाननं भक्तियुतं भजामः ।।
महाखुमारूढमकालकालं विदेहयोगेन च लभ्यमानम् ।
अमायिनं मायिकमोहकं तं गजाननं भक्तियुतं भजामः ।।
रविस्वरूपं रविभासहीनं हरिस्वरूपं हरिबोधहीनम् ।
शिवस्वरूपं शिवभासनाशं गजाननं भक्तियुतं भजामः ।।
महेश्वरीस्थं च सुशक्तिहीनं प्रभुं परेशं परवन्द्यमेवम् ।
अचालकं चालकबीजरूपं गजाननं भक्तियुतं भजामः ।।
शिवादिदेवैश्च खगैश्च वन्द्यं नरैर्लतावृक्षपशुप्रमुख्यैः ।
चराचरैर्लोकविहीनमेकं गजाननं भक्तियुतं भजामः ।।
मनोवचोहीनतया सुसंस्थं निवृत्तिमात्रं ह्यजमव्ययं तम् ।
तथापि देवं पुरसंस्थितं तं गजाननं भक्तियुतं भजामः ।।
वयं सुधन्या गणपस्तवेन तथैव मर्त्यार्चनतस्तथैव ।
गणेशरूपाय कृतास्त्वया तं गजाननं भक्तियुतं भजामः ।।
गजास्यबीजं प्रवदन्ति वेदास्तदेव चिह्नेन च योगिनस्त्वाम् ।
गच्छन्ति तेनैव गजानन ! त्वां गजाननं भक्तियुतं भजामः ।।
पुराणवेदाः शिवविष्णुकाद्याः शुक्रादयो ये गणपस्तवे वै ।
विकुण्ठिताः किं च वयं स्तुवीमो गजाननं भक्तियुतं भजामः ।।

मुद्गल उवाच

एवं स्तुत्वा गणेशानं नेमुः सर्वे पुनः पुनः । तानुत्थाप्य वचो रम्यं गजानन उवाच ह ।

गजानन उवाच

वरं ब्रूत महाभागा देवाः सर्षिगणाः परम् । स्तोत्रेण प्रीतिसंयुक्तो दास्यामि वाञ्छितं परम् ।।
गजाननवचः श्रुत्वा हर्षयुक्ताः सुरर्षयः । जगुस्तं भक्तिभावेन साश्रुनेत्राः प्रजापते ।।

देवर्षय ऊचु

गजानन ! यदि स्वामिन् ! प्रसन्नो वरदोऽसि मे । तदा भक्तिं दृढां देहि लोभहीनां त्वदीयकाम् ।।
लोभासुरस्य देवेश कृता शान्तिः सुखप्रदा । तया जगदिदं सर्वं वरयुक्तं कृतं त्वया ।।
अधुना देवदेवेश कर्मयुक्ता द्विजातयः । भविष्यन्ति धरायां वै वयं स्वस्थानगास्तथा ।।
स्वस्वधर्मरताः सर्वे कृतास्त्वया गजानन । अतः परं वरं ढुण्ढे याचमानाः किमप्यहो ।।
यदा ते स्मरणं नाथ करिष्यामो वयं प्रभो । तदा सङ्कटहीनान् वै कुरु त्वं नो गजानन ।।

गजानन उवाच

यद्यच्च प्रार्थितं देवा मुनयः सर्वमञ्जसा । भविष्यति न सन्देहो मत्स्मृत्या सर्वदा हि वः ।।
भवत्कृतं मदीयं वै स्तोत्रं सर्वत्र सिद्धिदम् । भविष्यति विशेषेण मम भक्तिप्रदायकम् ।।
पुत्रपौत्रप्रदं पूर्णधनधान्यप्रवर्धनम् । सर्वसम्पत्करं देवाः पठनाच्छ्रवणान्नृणाम् ।।
मारणोच्चाटनादीनि नश्यन्ति स्तोत्रपाठतः । परकृत्यं च विप्रेन्द्रा अशुभं नैव बाधते ।।
सङ्ग्रामे जयदं चैव यात्राकाले फलप्रदम् । शत्रूच्चाटनादिषु च प्रशस्तं तद्भविष्यति ।।
कारागृहगतस्यैव बन्धनाशकरं भवेत् । असाध्यं साधयेत् सर्वमनेनैव सुरर्षयः ।।
एकविंशतिवारं च एकविंशदिनावधिम् । प्रयोगं यः करोत्येव स सर्वसिद्धिभाग् भवेत् ।।
धर्मार्थकाममोक्षाणां ब्रह्मभूतस्य दायकम् । भविष्यति न सन्देहः स्तोत्रं मद्भक्तिवर्धनम् ।।
एवमुक्त्वा गणाधीशस्तत्रैवान्तरधीयत ।।

– कल्याण, 'गणेश अङ्क'बाट उद्धृत ।

## ठ) सर्वलक्ष्मीप्रद गणेशस्तवराज

सर्वलक्ष्मीप्रद गणेशस्तवराजको पाठ गर्नाले साधक सबै प्रकारका लक्ष्मीहरूको आश्रय बन्दछ । आत्मकल्याण र ऐश्वर्य चाहने साधकले विशुद्ध भई श्रद्धापूर्वक नित्य यसको पाठ गर्नुपर्दछ ।

ॐकारमाद्यं प्रवहन्ति सन्तो वाचः श्रुतीनामपि यं गृणन्ति ।।
गजाननं देवगणानताङ्घ्रिं भजेऽहमर्द्धेन्दुकृतावतंसम् ।।
पादारविन्दार्चनतत्पराणां संसारदावानलभङ्गदक्षम् ।।
निरन्तरं निर्गतदानतोयैस्तन्नौमि विघ्नेश्वरमम्बुदाभम् ।।
कृताङ्गरागन्नवकुङ्कुमेन मत्तालिजालं मदपङ्कलग्नम् ।।
निवारयन्तन्निभकर्णतालैः को विस्मरेत् पुत्रमनङ्गशत्रोः।।
शम्भोर्जटाजूटनिवासिगङ्गाजलं समानीय कराम्बुजेन ।।
लीलाभिराराच्छिवमर्चयन्तङ्गजाननं भक्तियुता भजन्ति।।
कुमारभुक्तौ पुनरात्महेतोः पयोधरौ पर्वतराजपुत्र्याः ।।
प्रक्षालयन्तङ्करशीकरेण मौग्ध्येन तन्नागमुखं भजामि ।।
तया समुद्धृत्य गजस्य हस्तं ये शीकराः पुष्कररन्ध्रमुक्ताः ।।

व्योमाङ्गणे ते विचरन्ति तारा: कालात्मना मौक्तिकतुल्यभास: ।।
कल्पावसानं परिचिन्त्य देवा: कैलासनाथं श्रुतिभि: स्तुवन्ति ।।
नागानने नागकृतोत्तरीये क्रीडारते देवकुमारसङ्घै: ।।
त्वयि क्षणङ्कालगतिं विहाय तौ प्रापतु: कन्दुकतामिनेन्दू ।।
मदोल्लसत्पञ्चमुखैरजस्त्रमध्यापयन्तं सकलागमार्थम् ।।
देवानृषीन् भक्तजनैकमित्रं हेरम्बमर्कारुणमाश्रयामि ।।
पादाम्बुजाभ्यामति वामनाभ्यां कृतार्थयन्तं कृपया धरित्रीम् ।।
अकारणङ्कारणमाप्तवाचां तन्नागवक्त्रं न जहाति चेत: ।।
येनार्पितं सत्यवतीसुताय पुराणमालिख्य विषाणकोट्या ।।
तच्चन्द्रमौलेस्तनयं तपोभिराराध्यमानन्दघनं भजामि ।।
पदं श्रुतीनामपदं स्तुतीनां लीलावतारं परमात्ममूर्त्ते: ।।
नागात्मकं वा पुरुषात्मकं वा त्वभेदमाद्यं भज विघ्नराजम् ।।
पाशाङ्कुशौ भग्नरदन्त्वभीष्टङ्करैर्दधानं कररन्ध्रमुक्तै: ।।
मुक्ताफलाभै: पृथुशीकरौघै: सिञ्चन्तमङ्गं शिवयोर्भजामि ।।
अनेकमेकङ्गजमेकदन्तं चैतन्यरूपं जगदादिबीजम् ।।
ब्रह्मेति यं वेदविदो वदन्ति तं शम्भुसूनुं सततं भजामि ।।
स्वाङ्कस्थिताया निजवल्लभाया मुखाम्बुजालोकनलोलनेत्रम् ।।
स्मेराननाब्जं मदवैभवेन रुद्धं भजे विश्वविमोहनन्तम् ।।
यं पूर्वमाराध्य गजाननं त्वां सर्वाणि शास्त्राणि पठन्ति तेषाम् ।।
त्वत्तो न चान्यत्प्रतिपाद्यमेतैस्तदस्ति चेत् सर्वमसत्यकल्पम् ।।
हिरण्यवर्णाञ्जगदीशितारङ्कविं पुराणं रविमण्डलस्थम् ।।
गजाननं यं प्रविशन्ति सन्तस्तत्कालयोगैस्तमहं प्रपद्ये ।।
वेदान्तगीतं पुरुषं भजेऽहमात्मानमानन्दघनं हृदिस्थम् ।।
गजाननं यन्महसा जनानां विघ्नान्धकारो विलयं प्रयाति ।।
शम्भो: समालोक्य जटाकलापे शशाङ्कखण्डं निजपुष्करेण ।।
सुभग्नदन्तम्प्रविचिन्त्य मौग्ध्यादाक्रष्टुकाम: श्रियमातनोतु ।।
विघ्नार्गलानां विनिपातनार्थं यं नारिकेलै: कदलीफलाद्यै: ।।
प्रसारयन्तं मदवारणास्यं प्रभुं सदाभीष्टमहं भजे यम् ।।
यज्ञैरनेकैर्बहुभिस्तपोभिराराध्यमाद्यं गजराजवक्त्रम् ।।
स्तुत्याऽनया ये विधिवत् स्तुवन्ति ते सर्वलक्ष्मीनिलया भवन्ति ।।

– शाक्तप्रमोदबाट उद्धृत ।

जय गणेश !

# ७. श्लोकानुक्रमणिकासन्दर्भ